ॐनमोभगवतेवासुदेवाय ॥ ॐनमःशिवाय ॥ ॐचैत्रशुक्लप्रतिपदिवत्सरारंभः तत्रो
दयिकीतिथिर्ग्राह्या चैत्रमासिजगद्ब्रह्माससर्जप्रथमेऽहनि शुक्लपक्षेसमग्रंतुतदासूर्यो
दयेसतीतिहेमाद्रौब्राह्मोक्तेः दिनद्वयेपितत्त्वेमामावास्यामौक्यपूर्वैव वत्सरादौवसन्तादौ
बलिराज्येतथैवच पूर्वविद्धैवकर्तव्याप्रतिपत्सर्वदानृपेतिनिर्णयामृतेवृद्धवसिष्ठोक्तेः
चैत्रस्यमलमासत्वेतुचैत्रसंवत्सरारंभश्चेत्के शुद्धएवतत्परे अत्रतैलाभ्यंगोनित्यः वत्स
रादौवसन्तादौबलिराज्येतथैवच तैलाभ्यंगमकुर्वाणोनरकंप्रतिपद्यतइतिवृद्धवसिष्ठो
क्तेः अत्रैवनवरात्रारंभः तत्रपरयुता अमायुक्तानकर्तव्याप्रतिपच्चण्डिकार्चने १
मुहूर्तमात्राकर्तव्याद्वितीयादिगुणान्वितेतिदेवीपुराणात् अत्रप्रपादानमुक्तंमदनरत्ने
भविष्ये अतीतेफाल्गुनेमासिप्राप्तेचैत्रमहोत्सवे पुण्येऽह्निविप्रकथितेप्रपादानंसमारं
भेदित्युपक्रम्य ततस्त्वाश्रयेद्द्विजामंत्रेणानेनमानवः प्रपेयंसर्वसामान्याभूतेभ्यःप्रति
पादिता अस्याःप्रदानात्पितरस्तृप्यन्तुहिपितामहाः अनिवार्यमतोदेयंजलमासचतुष्टय
मिति तथा प्रपादानमशक्तेनविशेषाद्धर्ममीप्सता प्रत्यहंधर्मघटकोवस्त्रसंवेष्टित

केनैषिकेवकृर्योमामहृयेपिवेनिस्मृतिचन्द्रिकोक्तेः अत्रप्रिणारानेनास्ति विष्णुवाय॰
नसंक्रांतिमन्वादियुगादिषु विज्ञायपिंडनिर्वापंसर्वेआद्वसमाचरेदितिकालादर्शो
क्तेः अकरणेप्रायश्चित्तमुक्तंस्मृतिविधाने नभुवःप्रतिमेत्रचष्ठानवांजलेजपेत् मन्वा
द्यायदातृनाःऊरूनैवबाधियऽतिपूर्वेषनवतिश्राद्धान्यपिनियानि नेषामप्येस्य
हः अमामनुयुगक्रांतिधृतिपातमहालयाः अन्वष्टक्यंचपूर्वेद्युःषण्णवत्योष्टका
स्तथेति ॥ चैत्रशुक्लतृतीयामत्स्यजयंती ॥ चैत्रशुक्लपंचमीत्यत्र अषाढशुक्ले
कारत्रीत्यपरे प्रयचतत्रपासकानानिमानेषांतकाम्या चैत्रशुक्लपंचमीकल्पादिः
अत्रस्नानदानादिमहाफलं चैत्रशुक्लाष्टम्यांभवान्यायात्रा तिः तत्रपुष्पवत्कानारा
प्राप्ताः अत्रभवानीयात्रोक्ताकाशीखण्डे भवानीयस्तुपश्येत्तशुक्लाष्टम्यांमधौन
रः नजातुशोकंलभतेसदानंदमयोभवेदिति अशोककलिकाप्राशनमुक्तंहेमाद्रौ
मोले अशोककलिकाश्चाष्टौयेपिबंतिपुनर्वसौ प्राशनमंत्रस्तु त्वामशोकवराभीष्ट
मधुमाससमुद्भव पिबामिशोकसंतप्तोमामशोकंसदाकुरु इति इयंबुधेऽष्टयेवि॰

ह्मकोटिनत्येति त्रिस्थलीसेतौ ब्राह्मपुराणेपि वारुणेनसमायुक्ता मधौकृष्णत्र
योदशी गंगायांयदिलभ्येतकोटिसूर्यग्रहैःसमेति॥ कल्पतरौब्राह्मे मधौकृष्णत्र
योदश्यांशतभिषायुते वारुणीतिसमाख्यातास्नातमहतीस्मृतेति चैत्रकृष्ण
चतुर्दश्यांतुविशेषःस्मर्यते चैत्रमासकृष्णपक्षेचतुर्दश्यांद्विजोत्तमाः स्नात्वारुद्रक
णैतीर्थेपरमंपदमाप्नुयादितिभविष्योक्तेः एषाशिवदर्शनेपुण्यफला चैत्रेकृष्णत्रयोद
श्यांयःस्नात्वाशिवंप्रेक्षतेपो नपुनःसंभवमाप्नोति गंगायांतुविशेषतः इति ॥ अत्रसर्वोप्य
योग्याह्ना कृष्णपक्षस्थत्वात इतिचैत्रः॥ एषाशिवदर्शनेपाद्मे तीर्थंचात्रदिनस्नाने ति(
लेस्मृपितृतर्पणे शनेयमेश्वरादीनामपुस्तदनम्पिनित्यम् माधवेमासिउर्वीतमधुसू
दनतुष्टिदं अथवैशाखस्नाने ॥ तत्रस्पृष्टीवदीलयेविस्मृतिपद्मयोः तुलामक
रमेषेषुप्रातःस्नानंविधीयते हविष्यंब्रह्मचर्यंचमहापातकनाशनं इतिमेषमासउ
क्तः प्रत्यरपिपदहयंउक्तंत्रैवपाद्मे मधुमासस्यशुक्लायामेकादश्यामुपोषितः पं
चदश्यांतभोवीरमेषसंक्रमणेतवा वैशाखस्नाननियमंब्राह्मणंतामनुज्ञया मधु

तत्र सा पूर्वा ग्राह्या त्रयोदशीतिथिः पूर्वस्मिन् तु निशीथिकाङ्के: चैत्रशुक्लचतुर्दशी पू
र्वा ग्राह्या निशि भ्रमेति भूत्वा निशाक्रयः स्वलभूयतः अतस्तत्र चतुर्दश्यां स्नानं कृत
न्नभवेदिति न्यायवैवतोन मधोः श्रावणमासस्य शुक्लायां च चतुर्दशी सा रात्रिव्या
पिनी ग्राह्या नान्या शुक्लाकराचनेति हेमाद्रौ बौधायनोक्तेः चैत्री पौर्णमासी सामा
न्यनिर्णयान्यैव अत्र विशेषो निर्णयामृते विलक्ष्यते ॥ चैत्री चित्रायुता चेत्स्यात्
सा विचित्रवस्त्रप्रदानेन सौभाग्यमाप्नोति तथा ज्योतिषि महेन्द्राकैश्च गौरीवाथ विचारेषु तेषु
चैत्रकी तत्राश्वमेधजं पुण्यं स्नानं अथाज्ञानसिद्धिर्भवेत् ॥ वायवीये संवत्सरकृतार्चायाः
साफल्यायाखिलास्तथा न् दमनेनार्चयेच्चैवं विशेषेण महाशिवं ॥ इयमन्वादिरपि
चैत्रकृष्णत्रयोदश्यां महावारुणीसंज्ञको योगः स्कन्दे वाचस्पतिनिबन्धने शनिवारस
मायुक्ता सा महावारुणी स्मृता गङ्गायां यदि लभ्येत कोटिसूर्यग्रहाधिका ॥ शुभयोगस
मायुक्ता शनौ शतभिषा यदि महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् चैत्रासितेवा
रुणर्क्षयुक्ता त्रयोदशी सूर्यसुतस्य वारे योगे शुभे सा महती महत्या गङ्गाजलेर्कग्र

स्तः पुनर्वसुबुधोपेता चैत्रमासि सिताष्टमी प्रातस्तु विधिवत्स्नात्वा वाजपेयफलं लभे-
दिति चैत्रशुक्लनवमी रामनवमी सा च मध्याह्नयोगिनी ग्राह्या उक्तं चागस्त्यसंहितायाम्
चैत्रशुक्ले तु नवमी पुनर्वसुयुता यदि सैव मध्याह्नयोगेन महापुण्यतमा भवेदिति त
था चैत्रमासि नवम्यां तु जातो रामः स्वयं हरिः पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकाम-
दा केवलापि सदोपोष्या नवमी शुभसंग्रहादिति दिनद्वये मध्याह्नव्याप्तौ तदभावे
वा पुनर्वसुयुतामपि पूर्वां त्यक्त्वा परैव ग्राह्या तदुक्तं तत्रैव नवमी च तस्मिन्नेव हि दिने स
माप्यते नरा स्नातो नामुत्र रदिवसे एकादशीनिमित्तोपवासेन नवमीव्रतांगपार-
णलोपो मा भूदिति न तु स्मार्तैरष्टमीविद्धैव ग्राह्या वैष्णवैस्तु परैवेत्युचितमिति बोध्यम्
इदं व्रतं नित्यकाम्यं तथा षष्ठ्यां जागरणं पितृनुद्दिश्य तर्पणम् तस्मिन्दिने तु कर्तव्यं
ब्रह्मप्राप्तिमभीप्सुभिः यस्तु रामनवम्यां तु भुंक्ते मोहाद्विमूढधीः कुम्भीपाकेषु-
घोरेषु पच्यते नात्र संशयः इत्यगस्त्यसंहितोक्तेः अत्र मध्याह्ने पूजा रात्रौ जागरणं परेद्युः
प्रातः पायसहोमः श्रीरामप्रतिमादिकं हेमाद्रौ बोध्यम् इयं च मलमासे न कार्या स

नममध्यजन्मेस्यात्रोपवासःकृतोभवेत् नकुर्यामेलमासेतुमहादानंव्रतानिचेतिमाधवी
येमत्स्यवचनात् अथमंत्रस्तु दशाननवधार्थाय धर्मसंस्थापनायच राक्षसानांविनाशा
यदैत्यानांनिधनायच परित्राणायसाधूनांजातोरामःस्वयंहरिः गृहाणार्घ्यंमयादत्तंभ्रातृभि
स्सहितोनघेति प्रतिमादानमंत्रस्तु इमांस्वर्णमयींरामप्रतिमांसमलंकृतां चित्रवस्त्रयु
गच्छन्नांरामोहंराघवायते श्रीरामप्रीतयेदास्येतुष्टोभवतुराघव इतिदत्वाविधानेनदद्या
द्वेदक्षिणांभुवं ब्रह्महत्यादिपापेभ्योमुच्यतेनात्रसंशयः चैत्रशुक्लैकादश्यांदोलोत्सवउक्तो
ब्राह्मे चैत्रमासस्यशुक्लायामेकादश्यांतुवैष्णवैः आंदोलनीयोदेवेशःसलक्ष्मीकोमहो
त्सवैः द्वादश्यांचैत्रमासस्यशुक्लायांदमनोत्सवः बौधायनादिभिःप्रोक्तःकर्तव्यःप्रति
वत्सरमितिरामार्चनचंद्रिकायां केः ऊर्जेव्रतेमधौदोलाश्रावणेतंतुपूजने चैत्रेचदमनारोप
मकुर्वाणोव्रजत्यधइतितत्रैववसिष्ठवचनाच्च इदंशुक्लास्तावधिकार्यं उपाकर्मोत्सर्ज
नेचपवित्रदमनार्पणे ईशानस्यबलिविक्षेपायनेपरिवर्तने ऊर्ध्वंतुशुक्लस्यचतुर्दशीमो
क्षयीतिविनिश्चयइतिगार्ग्यवचनात् चैत्रशुक्लत्रयोदश्यांमदनोत्सव

गाउक्तः ज्येष्ठमासिसितेपक्षेदशम्यांबुधहस्तयोः गरानंदव्यतीपातेकन्याचंद्रेवृषेरवौ
दशयोगेनरःस्नात्वासर्वपापैःप्रमुच्यते इति इहबुधभौमयोर्विकल्पः इयंचत्रयोग
बाहुल्येसादृश्याग्राह्याकार्यानतत्पुत्रे दशाहरासनोक्तंषड्दुत्के स्कंदे यांकांचित्सरि
त्प्राप्यदद्याद्दत्तिलोदकं मुच्यतेदशभिःपापैःसमहापातकैरपीति अत्रविशेषःकाशी
खंडेस्मर्यते ज्येष्ठमासिसितेपक्षेप्राप्यप्रतिपदंतिथिं दशाश्वमेधिकेस्नानान्मुच्यतेसर्वपा
तकैः एवंसर्वासुतिथिषुक्रमस्नायीनरोत्तमः आएवशुक्लपक्षदशमीप्रतिजन्माघमुत्
सृजेत् तथा लिंगेदशाश्वमेधेशंदृष्ट्वादशहरातिथौ दशजन्मार्जितैःपापैःत्यज्यतेना
त्रसंशयः ॥ ज्येष्ठशुक्लैकादशीनिर्जला तत्रनिर्जलाउपोष्याविप्रेभ्योजलकुंभान्दद्यादिति
निर्णयामृतेभक्तं ज्येष्ठपौर्णमास्यांसावित्रीव्रतं ॥ तत्रकेस्कंदभविष्ययोः ज्येष्ठपौर्णमा
स्यांसावित्रीव्रतं तत्रकेस्कंदभविष्ययोः ज्येष्ठमासिसितेपक्षेद्वादश्यांरजनीमुखे इत्युपक्र
म्य व्रतंत्रिरात्रमुद्दिश्यदिवारात्रिंस्थिराभवेदित्युक्त्वोक्तं उपसंहृतं ज्येष्ठमासिसितेपक्षेपूर्णि
मायांतथाव्रतं चीर्णंपुरामहाभक्त्याकथितेयंमयानघेति तदितरेणत्याज्ञस्यमेवाचरेति

पश्चात्तापाद्यस्त्वमावास्यायामाचरंति ॥ नक्षत्रोक्तं निर्णयामृते भविष्ये ॥ अमायां च तथा
ज्येष्ठे वटमूले महासती त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत् अथाशक्तौ त्रयोदश्यां न
क्तं कुर्यादिति हेमाद्रिः अयाचितं चतुर्दश्याममावास्यामुपोषणमिति हेमाद्र्यादिभिस्तु भाद्रपद
पूर्णिमायामित्युक्तं तत्तन्नेदानीमाचरंति अत्र पूर्णिमामावास्ये पूर्वविद्धे ग्राह्ये भूतविद्धा
नकर्तव्यामावास्या पूर्णिमा वर्जयित्वा तु निश्चेष्टं सावित्रीव्रतमुत्तमं इति ब्रह्मवैवर्तात् ।
यदा त्वष्टादशघटिकात्मकचतुर्दशी तदा परैव सर्वविद्धत्वात् सावित्रीव्रते पंचदशी तिथिः नागे
द्वादशभूतस्याष्टादशेन नेपरेह्नीति माधवोक्तेः अत्र पूर्णिमान्तरीये नैव यथा त्रिरात्रं सम्पाति
भवति तथा त्रयोदश्यादिग्राह्यं तस्य प्राधान्यात् एवममायाः अस्यामेव पौर्णमास्या
विशेषः स्मर्यते आदित्यपुराणे ज्येष्ठमासि तिलान्दद्यात्पौर्णमास्यां विशेषतः अश्वमेधस्य
यत्पुण्यं तत्प्राप्नोति न संशयः गयविष्टुः ज्येष्ठी ज्येष्ठायुता चेत्स्यात्क्षत्रोपानत्प्रदानेन नराधि
पत्यमाप्नोतीति इयं मन्वादिरपि सा पौर्वाह्णिकी ग्राह्येत्युक्तं तथा पराकें वामनपुराणे उद
कुंभाम्बुदानेन तालवृन्तसचंदने त्रिविक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमासि चेति ॥ इतिज्ये

षः ॥ आषाढशुक्लपौर्णमासीदशमीवमन्वादिः पूर्वाह्णव्यापिनीत्युक्तेः आषाढशुक्लद्वा
दश्यामनूराधायोगेन रहितायां पारणं कुर्यात् तथा च हेमाद्रौ भविष्ये ॥ आभाकासितपक्षेषु मै
त्रश्रवणरेवती संगमे न हि भोक्तव्यं द्वादश्यां द्वादशीष्वपि इति आषाढभाद्रकार्तिकशुक्लद्वा
दशी अत्र विशेषो विष्णुधर्मे मैत्राद्यपादे स्वपितीह विष्णुः पौष्णस्य पादे प्रतिबोधमेति श्रु
तेश्च मध्ये परिवर्तमेति स्वापप्रबोधपरिवर्तनमेव वर्ज्यं आषाढशुक्लपक्षैकादश्यां द्वादश्यां
वा विष्णुशयनोत्सवः कर्तव्यः उक्तं च हेमाद्रौ ब्राह्मे ॥ एकादश्यां तु शुक्लायामाषाढे भगवा
न् हरिः भुजंगशयने शेते क्षीरार्णवजले सदा इति हेमाद्रौ भविष्ये द्वादश्यां शुक्लपक्षे तु प्रस्वाप
वर्तनोत्सवः नैव वाराहे द्वादश्यां संधिसमयेन देवानां महत्सम्भवे आभाकासितपक्षेषु पा
रणं वर्तनादिकं इति अत्र द्वादश्यामिति पारणामात्रं विवक्षितं पारणाहे पूर्वरात्रे चरणाद्वी
स्वादयेच्च हरेर्निद्रामावेन चेद्विकोऽक्षेः निशि स्वापो दिवोत्थानं संध्यायां परिवर्तनं पादयोगो
यदा नस्यात् द्वादश्यामपि न तदा भवेत् द्वादश्यामुक्तसंयोगे पादयोगेन कारणमिति वाक्यात् इ
दं च मलमासे न कार्यं इशानस्य वलिविशोधायनपरिवर्तने तुलाकालादर्शे निषेधात् अ

र्चातुर्मास्यव्रतारंभ उक्तो भारते। आषाढे तु सिते पक्षे एकादश्यामुपोषितः। चातुर्मा
स्यव्रतं कुर्याद्यत्किंचिन्नियतो नरः॥ इति। अस्यानित्यत्वं तत्रैवोक्तं। वार्षिकांश्चतुरो मासा
न्वाहयेत्केनचिन्नरः। व्रतेन नो चेदाप्नोति किल्बिषं वत्सरोद्भवं। असंभवे तु लोके
तु कर्तव्यं तत्प्रयत्नतः॥ इति। अस्यारंभः शुक्रास्तादावपि कार्यः। न शोधावेन मौढ्यं च शुक्र
गुर्वोर्न वा तिथिः। खण्डत्वं चिंतयेदादौ चातुर्मास्यविधौ नरः॥ इति वृद्धगार्ग्योक्तेः। इदं च द्विती
याद्यारंभविषयं। तथा शौनकोऽपि द्वितीयाद्यारंभो भवत्येव। अशुचिर्वाशुचिर्वापि यदि
स्त्री यदि वा पुमान्। व्रतमेतन्नरः कृत्वा मुच्यते सर्वपातकैः॥ त्रिभागो वार्धनं दीपिकायाम्
सूतके। प्रारब्धे सूतके न स्यादनारब्धे तु सूतके इति। विस्मरणाद्वा यत्र संक्रांते तथा
मासे दैवेपि अवक्रमेति। मलमासेऽपि यो वै वर्जयेत्तन्निमात्र इति हेमाद्रौ चातुर्मास्यव्रत
प्रकरणे भविष्यवचनेन तत्प्रथमारंभविषयं। न च प्रतिवर्षं चातुर्मास्यव्रतं अनुपयोगान्
भिन्नतया अशौचादिपाते द्वितीयप्रयोगोपि कथं स्यादिति वाच्यं। प्रतिवर्षं च यः कुर्यादे
वं वैसंसरेद्धरिम्। देहांते तिपरीमेन विमानेनार्कवर्चसा। मोदते विष्णुलोके सो यावद्

तद्भूतं सत्सर्वमिति हेमाद्रौ भविष्योत्तरवचनेन प्रयोगो कार्य इति: अत एव ग्रहणप्रकारस्तु हेमाद्रौ
भविष्ये ॥ एवं तां प्रतिमां विष्णोः पूजयित्वा सयत्नतः । प्रभाषेत नरो विष्णोः कृताञ्जलिपुटः
स्तथा । चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि । इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ।
इदं व्रतं मया देव गृहीतं पुरतस्तव । निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव । गृहीतेऽस्मि
न्व्रते देव पञ्चत्वं यदि मे भवेत् । तदा भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन । भविष्ये । श्रावणे व
र्जयेच्छाकं दधि भाद्रपदे तथा । दुग्धमाश्वयुजे मासि कार्तिके द्विदलं त्यजेत् । स्कान्दे ।
माषमुद्गमसूराश्च चणकाश्च कुलत्थकाः । निष्पावा राजमाषाश्च आढकी द्विदलं स्मृ
तमिति । स्कान्दे । चत्वार्येतानि नित्यानि चतुराश्रमवर्तिनां । प्रथमे मासि कर्तव्यं नित्यं शाक
व्रतं नरैः । द्वितीये मासि कर्तव्यं दधिव्रतमनुत्तमं । पयोव्रतं तृतीये च चतुर्थे तु निशामय ।
द्विदलं बहुबीजं च वृन्ताकं च विवर्जयेत् । नित्यान्येतानि विप्रेन्द्र व्रतान्याहुर्मनीषिणस्तथा
मे [illegible] राजमाषांश्च मूलकं रक्तमूलकं । कूष्माण्डं चेक्षुदण्डं च चतुर्मासे त्यजेद्बुधः । तथा वि
शेषाद्बदरीधात्रीकूष्माण्डानि विवर्जयेत् । जीर्णधात्रीफलं ग्राह्यं कथितं कायशोधनम्

स्कांदे वार्षिकांश्चतुरो मासान्संसेव्य जनार्दने मंचखट्वादिशयनं वर्जयेद्भक्तिमान्नरः अन्
तौ वर्जयेद्भार्यां मांसं मधु परौदनं पटोलं मूलकं चैव वृंताकं च न भक्षयेदिति शाकशब्द
दशासमूढः मूलपत्रकरीराग्रफलकांडाधिरूढकाः त्वक्पुष्पं कवकं चेति शाकं दशवि
धं स्मृतमित्युक्तेः अधिरूढमंकुरः आचारप्रदीपे वृंताकं च कलिंगं च बिल्वोदुंबरभि
स्सटाः उदरे यस्य जीर्यंते तस्य दूरतरो हरिः भिस्सटेति कुस्तपावेदन्यात्रेभीस्सटेतिदी
र्घपाठनभीस्सटं श्वेतमानकमिति धान्वंतरिनिघंटुः तथा निष्पावान्राजमाषांश्च मसू
रांस्त्विनानिच वृंताकं च कलिंदं च सभेदेवविवर्जयेत् संधिनानिलशाकादीनि अत्रै
वनश्चमुहूर्ताधारणेउक्तेः रामार्चनचंद्रिकायां एष्वेचैवोदयादौतु मुहूर्तादिविषयं तदिति
निर्णीते आषाढ्यां पौर्णमास्यां कोकिलाव्रतमुक्तं हेमाद्रौ भविष्ये आषाढ्यां पौर्णमास्यां
तु संध्याकाल उपस्थिते संकल्पयेन्मासमेकं श्रावणे प्रत्यहं त्वहं स्नानं करिष्ये नियता
ब्रह्मचर्ये स्थिता सती भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयामिति अस्य नक्तव्र
तत्वात्सायाह्नव्यापिनी ग्राह्या अत्रैव व्यासपूजोक्ता न च मध्याह्नव्यापिनी ग्राह्या निनह

येनयानेनतुपरैवेतिसङ्ग्रासपदनौ उत्साषाढः श्रावणशुक्लतृतीयामधुस्रवा
ख्या गूर्जरेषु प्रसिद्धा सा परयुता ग्राह्येति दिवोदासीये श्रावणशुक्लचतुर्थी दूर्वा
गणपतिव्रतं सा मध्याह्नव्यापिनी ग्राह्या दिनद्वये तद्व्याप्तौ वा पूर्वा शुक्लचतुर्थ्यां
वैशुनामा तद्विज्ञो गणेश्वरः इति वचनात् श्रावणशुक्लपंचमी नागपूजायां चमत्का
रचिंतामणौ पंचमी नागपूजायां कार्या षष्ठीसमन्विता तस्यां तु तुषिता नागा इतरा स
चतुर्थिकेति मदनरत्नादावप्येवं अत्र विशेषो हेमाद्रौ भविष्ये श्रावणे मासि पंचम्यां
शुक्लपक्षे नराधिप द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः पूजयेद्विधिवद्वी
र दधिदूर्वांकुरैः कुशैः गंधपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ये तस्यां पूजयंती
ह नागान्भक्तिपुरस्सराः न तेषां सर्पतो वीर भयं भवति कुत्रचिदिति श्रावणशुक्लद्वा
दश्यां दधिव्रतं प्रागुक्तं उक्तादीनां निषेधः तत्र द्विविधव्यवहाराभावात् अत्रैव द्वादश्यां
विष्णोः पवित्रारोपणमुक्तं हेमाद्रौ विष्णुरहस्ये श्रावणस्य सिते पक्षे कर्कटस्थे दिवा
करे द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतं द्वादश्यां श्रावणे मासि पंचम्यामथवा हि

लि॰ नि॰ व्या॰
११

न कृतकृत्येषु कृतनयं पंचदशपापयात्यवेति तथा शिवेनतत्रैवकालोत्तरेतंत्रे श्रा
षाढेनैवतनदेशणानभस्यनभसोस्तथा अष्टम्यांचचतुर्दश्यांपक्षयोरुभयोस्समनिति
अधिवासनेनदीपिकायां गोरोहांतरितेकालेपूर्वेद्युर्वाधिवासनं इति गोणकालो
रामार्चनदीपिकायांनदहस्येव पवित्रारोपणंविद्याच्छ्रावणेनभवेद्यदिकार्तिकाद्व
पिशुक्लार्केकर्तव्यमितिनारदः हेमरौप्यताम्रक्षौमैः सूत्रैः कौशेयपद्मजैः कुशैःका
शैश्चकर्पासैर्ब्राह्मण्याकारितैः शुभैः कृत्वात्रिगुणितंसूत्रंत्रिगुणीकृत्यशोधयेत् तथोत्त
मंपवित्रंस्यादष्टोत्तरसहस्रतंतुभिः समन्यासहितंद्वाभ्यांशताभ्यांमध्यमंस्मृतं साशीति
नाशतेनैवकनिष्ठंतत्समाचरेत् उत्तमंतुशतग्रंथिपंचाशद्ग्रंथिमध्यमं कनिष्ठंतुपवि
त्रंस्यात्षट्त्रिंशद्ग्रंथिशोभनं षट्त्रिंशद्वाचतुर्विंशद्द्वादशैर्वाचकेवलं चतुर्विंशद्द्वाद
शाष्टौविलेकेमनयोविदः शिवपवित्रेतत्रैवशिवागमेपकारदशाभिर्वासूत्रैस्त्रिश
ताद्वाष्टयुक्तया पंचाशताबालकेतच्चतस्त्रग्रंथ्यनरालकं द्वादशांगुलमानानिव्या र
सादशांगुलानिच लिंगविस्तारमानानिचतुरंगुलकानिवेति एतच्चनित्यं नकरोति

विधानेनपवित्रारोपणंनयः तस्मात्संवत्सरेपूजानिष्फलामुनिसत्तम तस्माद्भक्तिसमायु
क्तेनैरविल्लपरायणैः वर्षेवर्षेप्रकर्तव्यंपवित्रारोपणंहरेरितितत्रैवोक्तं श्रावणशुक्लच
तुर्दशीपूर्वेयुनाग्राह्याचैत्रचतुर्दशीवत् अथोपाकर्म तच्चबह्वृचैःश्रावणेकार्यं दिन
द्वयेश्रावणेनउत्तरंग्राह्यं तद्वसनत्कात्यायनौ अथोत्राद्वयसत्वेत्स्वसंक्रान्तिग्रहणंभवे
त् उपाकर्मतत्कर्वीतपरतश्चेतदोषकृत् इदंचकर्कटस्थेभानौनिषिद्धंसचनिषेधोन
र्मदोत्तरभागविषयः माधवीयपारिजातादौस्थितः नर्मदोत्तरभागेनकर्तव्यंसिंहयुक्त
के कर्कटसंस्थितेभानावुपाकुर्यात्तुदक्षिणेइतिवचनात् केचित्तुसामगानांसिंहस्थे
रवावुपाकर्मविधानात्तद्वैवास्योपसंहारःचतथाकरणवाक्यस्याग्रेयथेतिवदन्ति एत
च्छुक्लासत्वादावपिकार्यं इतरैःपूर्वंतेइदंयाजुषाःपर्वणिकुर्युः पर्वद्वैधेत्वापस्तंबै
स्तत्रंग्राह्यं इतरैःपूर्वं इदंचोपासनेगौकर्तव्यं अथाप्येरन्वारब्धइतिषष्ठेनलौकिर
काग्नौ अत्राश्वलायनेनश्रवणाकर्मोक्तं श्रावण्यांपौर्णमास्यांश्रवणाकर्मेति न
चास्तमयपूर्वग्राह्या अस्तमितेश्वानौपाकं अपवित्वेतिसूत्रात् अतएवसागरेनारदः

भानौसिंहगतेसूर्येयस्यगौःसंप्रसूयते मरणंतस्यनिर्दिष्टंषड्भिर्मासैर्नसंशयः तत्रशां
तिंप्रवक्ष्यामियेनसंपद्यतेशुभं प्रसूतांतत्क्षणाद्देवतांगांविप्रायप्रदापयेत् ततोहोमःप्र
कर्तव्योहुताक्तैराजसर्षपैः आहुतीनांहुताक्तानामयुतेनजुहुयात्ततः व्याहृतिभिश्चाय
होमःसोपवासःप्रयत्नेनदद्याद्विप्रायदक्षिणामिति अथर्ववेदिनांगृह्यपरिशिष्टे मा
सेचतुर्थेचमहिषीश्रावणेवडवादिवा सिंहेगावःप्रसूयंतेस्वामिनोमृत्युदायिका इति
अत्रतदुक्ता अस्तनाख्याशांतिकार्या दिनद्वयेसत्त्वेतुपरेतिनिर्णयामृते ततःकृष्णतृ
तीयाकज्जलेसंज्ञासापरेति दिवोदासीये नभोबहुलवन्ध्यांबहुलाख्यामध्यदेशप्रसि
द्धासायाकृत्स्नव्यापिनीग्राह्या दिनद्वयेनव्याप्तौतुपूर्वा अत्रगोपूजायवान्नाशनेचकार्ये
इतिदिवोदासीये अथजन्माष्टमी साचश्रावणकृष्णपूर्णिमांतपक्षेभाद्रपदकृष्ण
जन्माष्टमीव्रतंनित्यं जयंतीव्रतंतुनित्यकाम्यं यस्मिन्वर्षेजयंत्याख्योयोगोजन्माष्टमी
तदा अंतर्भूताजयंत्यांस्यादित्ययोगप्रशस्तिरिति माधवः हेमाद्रिस्तुजयंतीव्रतंनि
त्यं जयंतीशब्दोरोहिणीविशेषवचनः अभिजिन्नामनक्षत्रंजयंतीनामशर्वरी मुहूर्तो

विजयोनामयत्रजातोजनार्दनःइतिब्रह्माण्डवचनात् तेननयुक्तरोहिण्यांगौणापवक्त
मेकालभ्वनिशीथं समयोगः रोहिण्यानिशीथेराजसत्तम समजायतगोविंदोबा॰
लरूपेचतुर्भुजः तस्मात्तंपूजयेत्तत्रेतिवह्निपुराणात् एवंरोहिणीयोगाभावेप्यष्टमी॰
त्वयाप्युक्ताष्टमीग्राह्या परदिनेसत्त्वपितद्योगोकिंचित्करः बुधवारादिवत् यत्तुका
टे उदयेचाष्टमीकिंचिन्नवमीसकलायदि लभ्यतेबुधसंयुक्ताप्राजापत्यर्क्षसंयुता
अपिवर्षशतेनापिलभ्यतेवानलभ्यतेइतितन्नहानादिविषयं उपवासाश्रवणात् उदये
चेद्दोदयइतिमाधवीयं अर्थात्तेनयोगोपेनापारणमुदयेसन्नीतिविलक्षणमौक्तेः अत्र॰
केचित् उदयव्यापिनीग्राह्याकुलेनिर्णयरूपोषणे निम्बार्कोभगवानेषांवांछितार्थ
प्रदायकः इतिहेमाद्रौनिर्वसप्तमीव्रते भविष्यवचनाभिधानादित्यसंप्रदायिनामौदयि
केवेयं एवंशिवरात्र्यादिकमपीत्याहुः नहस्वोनाडिंयंते प्रकरणेनतिन्नसप्तमी॰
व्रतेनिमित्तितस्यास्यास्यागमनायोगादितिदिक् श्रीकृष्णदेवकीवसुदेवयशोदानं
दादिप्रतिमानिर्माणपूजनादिप्रकारादिकंव्रतहेमाद्रौस्पष्टं नैवंभविष्योचराखो

ति॰ नि॰ १३

मंत्रः ॥ क्षीरोदार्णवसंभूत अत्रिनेत्रसमुद्भव । गृहाणार्घ्यं शशांकेमं रोहिण्या सहितो मम
ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषांपते नमस्ते रोहिणीकांत अर्घ्यं नः प्रतिगृह्यतामिति
श्रावणामावस्यायां कुशाग्रहणमुक्तं हेमाद्रौ हारीतेन । मासे नभस्यमावस्या तस्यां द
र्भोच्चयो मतः ॥ अयातयामास्ते दर्भा विनियोज्याः पुनः पुनरिति ॥ श्रावणो नभः दर्शानप
त्त्रेणोक्तं ॥ मदनरत्ने ॥ मासे नभस्यमावस्या तस्यां दर्भोच्चयो मतः इति ॥ मरीचिवाक्यमुदा
हृत्य द्वैतपूर्णिमांताभिप्रायेण हारीतेन सह एकवाक्यतैव । केचित्तु मरीचिवाक्ये
पि दर्शान्तपक्षमाश्रित्य महालयानुगतपर्वे कुशोच्चयमाहुः ॥ इति श्रावणः ॥ भाद्रप
दशुक्लतृतीयायां हरितालिकाव्रतं तत्र परयुता ग्राह्या ॥ मुहूर्तमात्रसत्वेऽपि दिने गौरीव्रतं प
रे ॥ इति माधवोक्तेः ॥ हरितालिकानपुरस्कारेणापि परविद्धग्रहणवचनानां दिवो
दासीये उदाहृतत्वाच्च भाद्रशुक्लचतुर्थी सा पूर्वा मातृविद्धा गणेशव्रते इत्युक्तेः ॥ इयं
रविभौमयोरतिप्रशस्ता या भौमेनार्केण या युता महती सात्र विघ्नेशमर्चित्वेष्टं लभे
न्नर इति निर्णयामृते वाराहोक्तेः ॥ अत्र चंद्रदर्शनं निषिद्धं तथा चापरार्के मार्कंडेयः

सिंहादिमेषुशुक्लपक्षेचनष्टोचंद्रदर्शने मिथ्याभिहृषिनंकुर्यान्नस्मान्यपेन्ननस
देति पराशरः कन्यादिमेषुचनष्टेन्दुशुक्लेचंद्रस्यदर्शने मिथ्याभिहृषिनकुर्यान्नस्मा
नृपेन्नेसदा नहोषपंतयेसिंहः प्रसेनमितिवैपठेत् श्लोकस्तुविष्णुपुराणे सिंहः
प्रसेनमवधीत्सिंहोजांबवताहतः सुकुमारकमारोदीस्तवह्येषस्यमंतकः भाद्र
शुक्लपंचमी ऋषिपंचमी साहेमाद्रिमतेपरा शिवापरयुताग्राह्यापंचमीतिदीपिको
क्तेः पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिः माधवमतेनपूर्वासर्वत्रपंचमीएवं
मुक्तेः चरकनैवनिर्णयास्तेनसाहे भाद्रशुक्लाष्टमी दूर्वाष्टमीसापूर्वाग्राह्या ज्ये
ष्ठाष्टमीनिषिद्धानुमासिभाद्रपदेभवेत् दूर्वाष्टमीनसातेषामोत्त्रासाविधीयते३
निपुराणसमुच्चयोक्तेः यत्तुमुहूर्ते रोहिणेऽष्टमीपूर्वावायदिवापरा दूर्वाष्टमीनसा
कार्याज्येष्ठामूलेचवर्जयेत् इतित्रैरस्यात्रायणवचनंतन्मूलंदिनेज्येष्ठादियोगेद
ष्टव्यं दूर्वाष्टमीसदाकार्याज्येष्ठामूलर्क्षसंयुता नयाच पेन्नवेशूजिनाद्वाहस्य
पक्षानिनान्यथा भतेशयुहेममूलेनसार्ज्ञीषविवर्जयेदिति नविधेयादिति हेमा

ति॰
नि॰
१४

द्रोस्थिते ॥ इदं चागस्त्योदये कन्यार्के चनकार्ये शुक्लभाद्रपदमासि दूर्वासंज्ञातव्याष्टमी
सिंहार्के पवकर्तव्यानकन्यार्के कदाचन ॥ सिंहस्थे सोत्रमासूर्येन दिने मुनिसत्तम इति
मदनरत्ने स्कांदोक्तेः ॥ अगस्त्य उदिते नात पूजयेद्यस्तु नो द्रूर्वा वैधव्यं पुत्रशोकं चैति दूश
वर्षाणि पंच चैतिन वैवदोषोके च ॥ इदं च व्रतं स्त्रीणां नित्यं यान पूजयने दूर्वां मोहादि
ह यथाविधि ॥ त्रीणि जन्मानि वैधव्यं लभते नात्र संशय इति पुराणसमुच्चयात् ॥ यदा र
जोहादिकं विना ग्रहमीन लभ्यं न तदा नैवेवोक्तं कर्तव्यं वैकभक्तेन त्येष्टामूला यदा भ
वेत् दूर्वामभ्यर्चये द्वाज्ञानवं त्यां दिवसं नयेन इति अत्र निर्णय मदनरत्ने भविष्ये शुचौ
देशे प्रजातायां दूर्वायां ब्राह्मणोत्तम स्थाप्य लिंगं ततो गंधैः पुष्पैः धूपैः समर्चयेत् द
ध्यक्षतैर्द्विजश्रेष्ठ अर्घ्यं दद्यात्रिलोचने दूर्वाशमी भवाविधि वन्मूजयेत् कुड्याविना ॥ मंत्र
स्तु त्वं दूर्वेमृतजन्मासि वंदितासि सुरासुरैः सौभाग्यं संततिं देहि सर्वकार्यकरी भव ॥ य
था शाखाप्रशाखाभिर्विस्तृतासि महीतले तथा ममापि संतानं देहि त्वमजरामरमिति
अज्ञानाग्निपक्वं भक्षयेत् अनग्निपक्वमश्नीयाद्दधि दधिफलं तथा अक्षारलवणं ब्रह्म

तृतीयादिने नैव भविष्योक्तेः । अथैव ज्येष्ठापूजोक्ता माधवीये स्कान्दे मासि भाद्रपदे शुक्ले प-
क्षे ज्येष्ठार्क्षसंयुते । यस्मिन्कस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनं इति । इयं ज्येष्ठायोगवशेन पूर्वा
परा वा ग्राह्या । दिनद्वययोगे परा । पूर्वोक्तरात्रियोगे पूर्वैव । नवम्या सह संकुर्याद्दशमीनात्रसंश-
यः । मासि भाद्रपदे शुक्लपक्षे ज्येष्ठर्क्षसंयुता । रात्रिर्यस्मिन्दिने तत्र ज्येष्ठायाः परिपूजनमिति
नैवोक्तेः । अस्यापवादः । यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः । तस्मिन्नह्नि विधा पूजा
चन्मूला चेन्मृतैवासर इति । इदं च केवलतिथौ केवलनक्षत्रे चोक्तं मान्ते । अन्याह्निकं तिथ्या-
युक्तं नक्षत्रे दैवतं व्रतं । प्रतिज्येष्ठाव्रतं यस्य विहितं केवले शुभे । तिथावेवाथवा वर्क्षे वेदाद्यं हितीयं
केवलत्वेक इति । दाक्षिणात्यास्त्वान्त्रपक्षं कुर्वंति । तथा मैत्रेणावाहयेद्देवीं ज्येष्ठायां तु प्र-
पूजयेत् । मूले विसर्जयेद्देवीं त्रिदिनं व्रतमुत्तमं इति । मंत्रस्तु । ज्येष्ठायै ते नमस्तुभ्यं ज्येष्ठायै ते नमो
नमः । शार्वायै ते नमस्तुभ्यं शाकंभर्यै ते नमो नमः । भाद्रपदे शुक्लद्वादश्यां श्रवणयोगरहितायां
पारणं कुर्यात् । आभाकासितपक्षेषु तिथिर्दिवा दासोदाहनवचनात् । इयं एकादशी मोहा-
भारणं श्रवणे यदि । कथोनिर्हंति तत्पुण्यं द्वादशी द्वादशीभवमिति । तत्रैव स्कांदात् । अस्पन

लि॰
नि॰
१५

शैवप्रतिप्रसवः मार्कंडेयः विशेषेणमहीपालश्रवणंवर्धनेयदि तिथिक्षयेनभोक्तव्यंद्वा
दशीलंघयेन्नहीति इत्थंचश्रवणंद्वेधाविभज्यमध्यविंशतिघटिकायोगंमङ्गलापारणांका
र्यं नतुक्तंविलम्बयेत् श्नेश्रुमध्येपारितंनैमेति सत्रिप्रवोधपरिवर्तनेनमेववर्ज्यमिति केचित्
वनुर्धाविभज्यमध्यमपादद्वयंवर्ज्यमित्याहुः अत्रैवविलम्बपरिवर्तनोत्सवंकुर्यात् अत्रैव॰
शक्रध्वजोत्थापनमुक्तमपरार्केगर्गेण द्वादश्यांतसितेपक्षेमासेप्रोष्ठपदेतथा शक्रमुत्
थापयेद्राजाविष्णुश्रवणवासरे इयमेवश्रवणद्वादशी नचैकादश्यांद्वादशीश्रवणयो
गेसैवोपोष्या विलम्बितत्वलाख्ययोगविशेषात् एकादश्याःश्रवणयोगाभावेपिनहिताव
च्छेदेनश्रवणस्पृष्टद्वादशीयोगादेवविलम्बितत्वमिति हेमाद्रिमतं निर्णयामृतेनुश्रवणै
कादशीद्वादशीभ्यांयोगएवविलम्बितत्वेनान्यथेति यथानिशीथानंतरंसूर्योदयावधि
कलामात्रमपिश्रवणंतत्रदापिपूर्वैव दिवोदासीयेतुरात्रेःप्रथमयामेश्रवणयोगेपूर्वार
न्यथोत्तरेत्युक्तमितिबुधवारेतिप्रशस्ता यदात्वेकादश्येवश्रवणयुतानद्वादशीतदैकाद
श्यांव्रतंभवति यदाद्वादश्येवश्रवणयुतातदाशक्तउभयत्रोपवसेत् अशक्तस्त्वेकादश्यां

मौणोपवासं कृत्वा द्वादशीमुपवसेत् इदं व्रतं काम्यमिति गौडाः नित्यमिति दाक्षिणात्याः पा
रणं तु भक्षणैर्मन्त्रैर्नैवाक्रमयेत् भाद्रपदे श्रवणैकादश्यां मध्याह्ने वामनावतारः अत्र वा
मनपूजाप्रतिमादानादिकं व्रतहेमाद्रौ ज्ञेयं श्रवणयुतस्यैकादश्या अलाभे तु दशमीवि
द्धापि श्रवणयुता ग्राह्या तथा च मदनरत्ने वह्निपुराणे दशमीकादशी यत्र सा नोपोष्या भ
वेत्त्रिधिः श्रवणेन तु संयुक्ता सोपोष्या सर्वकामदेति अस्यां द्वादश्यां दुग्धव्रतसंकल्पः इय
व्रतेन तु पयसादिकं वर्ज्यं दधितक्रादयस्तु न हि कारा ग्राह्या एव ननु एवं सति पञ्चामृतादिलीरनिषे
धोपि दध्यादिग्राह्यं स्यादिति न तद्वाचनिकनिषेधसत्त्वात् तदाहापरार्के संग्रहे क्षीराण्या
निवर्ज्यानि न हि काराणि तु यः सप्तरात्रं व्रतं कुर्यात् प्रयत्नेन समाहितः व्रतं गोमूत्रयावकं
भाद्रशुक्लचतुर्दश्यामनन्तव्रतं तत्र द्विमुहूर्ताप्योदयिकी तिथिर्ग्राह्येति माधवः दिवोदासीये
तु मध्याह्ने भोज्यवेलायामिति कथाश्रवणान्मध्याह्नव्यापिनी ग्राह्येत्युक्तं सिंहगे सूर्ये एक
विंशतिदिनोपरि अगस्त्योदयः इदं निर्णयामृते हरिसंक्रमादेकादशविंशतिमहागस्त्यः इ
ति दिवोदासीये व्यासवचनात् तत्र काशपुष्पमयीमगस्त्यप्रतिमां कृत्वा तत्र नादिकं अग

स्यः स्वतंत्रमातृश्राद्धं वदत्याद्येति तन्न हेमाद्रौ स्पष्टं भाद्रपदपौर्णमास्यां प्रपितामहान्वंशस्त्री-
न्तुहिश्राद्धं कार्यं तदुक्तं हेमाद्रौ ब्रह्ममार्कंडेययोः नांदीमुखानां प्रथमं कन्याराशिगते रवौ
पौर्णमास्यां तु कर्तव्यं वाराहवचनं तथेति नांदीमुखत्वं चैवोक्तं तत्रैव पिता पितामहश्चैव तथै-
व प्रपितामहः त्रयोह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः तेभ्यः पूर्वतरा ये च प्रजावंतः सु-
खैधिताः ते तु नान्दीमुखा नांदीसमृद्धिरिति कथ्यते पत्न्याश्च नित्यं प्रथमं ह्यमित्युक्तेः अत्र मा-
तामह्याश्च पिकार्याः पितरो यत्र पूज्यंते तत्र मातामहा अपीति पौम्योक्तेः पितृशब्दस्य पितृमा-
तापरमात्रत्वात् जनकपरत्वे बहुवचनासमंजस्यात् आह्निके तु वचनान्निवृत्तिः अथ-
महालयः पृथ्वीचंद्रोदये वृद्धमनुः आषाढीमवधिं कृत्वा पंचमं पक्षमाश्रिताः कांक्षंति
पितरः क्लिष्टा अन्नमप्यन्वहं जलं ब्रह्मांडमार्कंडेययोः कन्यागते सवितरि यान्यहानि तु
षोडश क्रतुभिस्तानि तुल्यानि इत्युदाहृतं षोडशत्वं द्वेधा व्याख्यातं तिथिवृद्ध्या पक्षस्य षोड-
शदिनत्वे श्राद्धाहत्वमर्थमित्येकः पक्षः भाद्रपूर्णिमया सहेति द्वितीयः आश्विनशुक्लप्रति-
पदा सहेति तृतीयः इह पंच पक्षाः पक्षः १ पंचम्यादि २ अष्टम्यादि ३ दशम्यादि ४

एकस्मिन्नेकस्मिन्दिने श्राद्धमिति ५ तथा वृद्धगौतमः अथापरपक्षे श्राद्धं पितृभ्यो दद्यात् पंचम्यादिदर्शांतं अष्टम्यादिदशम्यादि सर्वस्मिन्नेवेति हेमाद्रौ नागरखंडे आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे तस्य संवत्सरं यावत्संतृप्ताः पितरो ध्रुवमिति सकृन्महालये वर्ज्यं तिथ्यादिकं पृथ्वीचंद्रोदयप्रयोगपारिजातयोर्वृद्धं वसिष्ठः नंदायां भार्गवदिने च त्रयोदश्यां त्रिजन्मसु एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् जन्मभं तत्पूर्वोत्तरे त्रिजन्मानि अत्रापवादो हेमाद्रौ अमापाते भरण्यां च द्वादश्यां पक्षमध्यके तथा तिथिं च नक्षत्रं वारं च न विचारयेदिति पराशरमाधवीयमदनपारिजातादिष्वप्येवं निर्णयदीपिकायां तु पितृमृतदिनेऽपि सर्वनिषेधापवाद उक्तः आषाढ्याः पंचमे पक्षे कन्यासंस्थे दिवाकरे मृताहनि पितुर्यो वै श्राद्धं दास्यति मानवः तस्य संवत्सरं यावत्संतृप्ताः पितरो ध्रुवमिति नागरखंडे या तिथिर्यस्य मासस्य मृताहे तु प्रवर्तते सा तिथिः पितृपक्षे तु पूजनीया प्रयत्नतः इति कात्यायनोक्तेश्च महालये क्षयाहे च दर्शे पुत्रस्य जन्मनि तीर्थे च निर्वपेत्पिंडान् विवाहादिकेष्वपि कात्यायनः अथातः पक्षमध्ये न करोति

कदिनेपरा निषिद्धेपिदिनेकुर्यात्पिंडदानंयथाविधीति यत्तुस्मृत्यर्थसारे विवाहव्रतचूडा
सुवर्षमर्धेनदर्शके पिंडदानंमृदास्नानंनकुर्यात्तिलतर्पणं अस्यापवादमाहदिवोदासीये
बृहस्पतिः तीर्थेसंवत्सरेप्रेतेपितृयागेमहालये पिंडदानंप्रकुर्वीतयुगादिमरणेमघे म
हालयेगयाश्राद्धेमातापित्रोर्मृतेहनि कृतोद्वाहोपिकुर्वीतपिंडनिर्वपनंसदेति संन्यासि
नानद्वादश्यांश्राद्धंकार्यं यतीनांतुवनस्थानांवैष्णवानांविशेषतः द्वादश्यांविहितंश्रा॰
द्धंकृष्णपक्षेविशेषतः इतिपृथ्वीचंद्रोदयसंग्रहोक्तेः इदंचश्राद्धमन्त्रैनैवकर्तव्यं मृताहं
वसपिंडंचगयाश्राद्धंमहालयं आपन्नोपिनकुर्वीतश्राद्धंमासेनकर्हिचिदिति स्मृतिद
र्पणेगालवोक्तेः तथात्रदेवतासंग्रहे तातोवापितृव्यंसपत्नजननीमातामहादित्रयंस
स्त्रीकंतनयादितातजननीस्वभ्रातरस्तत्स्त्रियः ताताम्बात्मभगिन्यपत्यधवयुग्जाया॰
पितासद्गुरुः शिष्याप्ताःपितरोमहालयविधौतीर्थेतथातर्पणे इति अस्यार्थः तातत्र॰
यीमातृत्रयीच अत्रविशेषस्मृतिदर्पणेगालवोक्तेः अनेकामातरोयस्यश्राद्धेचापरपा
क्षिके अर्घ्यदानंपृथक्कुर्यात्पिंडमेकंतुनिर्वपेत् जीवन्मातृकस्तुसापत्न्यमातुरेको॰

नि॰ सि॰ १८

अशक्तौनस्मृति तथा स्वसृणांच विशेषेण मातामह्यास्तथैवचेति अशक्तौनुस्मृतिर-
त्नावल्यां सभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैवच विधवाकारयेच्छ्राद्धंयथाकालमतंद्रि-
ता विधवास्वयंसंकल्पंकृत्वान्यब्राह्मणद्वारादिन्युक्तं प्रयोगपारिजाते अत्रैकःपाको
वैश्वदेवंतंत्रपिंडवहिश्चैकमिति स्मृत्यर्थसारे अत्रैकोद्दिष्टेषुपाणिहोमःपिंडश्राद्धि-
ज्ञांतिकरुत्याचार्यः अग्निलोचनौ विश्वेदेवौप्रतिदिनंचप्रयोगभेदाद्दक्षिणाभेदः प्रयो-
गैक्यादेनएववादक्षिणेतिकालहेमाद्रौस्थिते पत्नश्चसंन्यस्तपितृकादिनाजीवत्पि-
तृकेनापिकर्तव्यं वृद्धौतीर्थेचसंन्यस्तेनातेचपितरिसति येभ्यएवपितादद्यात्तेभ्योद-
द्यात्स्वयंसुतइतिकात्यायनोक्तेः यत्तुकौंडिन्यः दर्शश्राद्धंगयाश्राद्धंश्राद्धंचापरपाक्षि-
के नजीवत्पितृकःकुर्यात्तिलैस्तर्पणमेवचेति तत्संन्यस्तपितृकाद्यन्यपरं काम्य-
श्राद्धपरंवा पत्नश्चजीवत्पितृकेणपिंडरहितंकार्यं मुंडनंपिंडदानंचप्रेतकर्मचसर्वशः
नजीवत्पितृकःकुर्याद्गुर्विणीपतिरेवचेति इत्तोक्तेः आन्वष्टक्यमातृवार्षिकादौतव-
चनाद्भवति तथाच्छागलेयः पिंडोपत्रनिवर्तेतमघादिषुकथंचन संकल्पेनतदाका-

यं नियमात्कृत्वादिभिः अत्र श्राद्धांगतर्पणं पक्षश्राद्धे प्रतिदिनं श्राद्धोत्तरं सकृन्महाल
ये तु परे किं कार्यं तदुक्तं नारदीये पक्षश्राद्धं यदा कुर्यात्तर्पणं तु दिने दिने सकृन्महाल
ये चैव परेहनि तिलोदकमिति पृथ्वीसंग्रहे पक्षश्राद्धे हिरण्ये च परेहनि तिलोदकमि
ति तत्सकृन्महालयविषयं प्रयोगपारिजाते गार्ग्यः कृत्वे भाद्रपदे मासि श्राद्धं प्रतिदि
नं भवेत् पितॄणां प्रत्यहं कार्यं निषिद्धाहेपि तर्पणं एतच्च नित्यकाम्यं मलमासेपि न
कार्यं पित्रोर्मरणप्रथमाब्दे कृताकृतमिति त्रिस्थलीसेतौ अत्र भरणीश्राद्धमपि प्रश
स्तं तदुक्तं मात्स्ये भरणी पितृपक्षे तु महती परिकीर्तिता अस्यां श्राद्धं कृतं येन स गयः
श्राद्धकृद्भवेत् हस्ते वेदोदये नभस्यापरपक्षस्य द्वितीयायां यदि याम्यभे तृतीया चाश्वि
नीभिस्संहिता प्रीतिदा पितुः अस्मिन्पक्षे कपिलषष्ठी तदुक्तं वाराहे नभस्यकृष्ण
पक्षे तु रोहिणीपातभूसुतैः युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्तिता व्रतोपवासनि
यमैर्भास्करं तत्र पूजयेत् कपिलां च द्विजायाथ दत्वा क्रतुफलं लभेत् अत्रैव हस्तार्कफ
लानि राय रु विनिर्णयामृते पुराणसमुच्चये भाद्रमासस्यासितपक्षे भानौ चैव करे स्थिते

सिं॰
नि॰
९९

पानेकुजेचवोहिरण्यंसाषष्ठीकपिलाभवेत् संयोगेनचनत्र्णीतानिर्दिष्टापरमेष्ठिनेति ॥ ए
मेवचंद्रोदयेनउक्तंभविष्ये नदृष्टादपदेमासिषष्ठ्यांपक्षेसितेनरैः चंद्रषष्ठीव्रतंकुर्यान्न
वैवधःप्रशाम्यते चंद्रोदयेयदाषष्ठीपूर्वेवाप्यपरेहनि चंद्रषष्ठ्यांसितेपक्षेसैवोपोष्याप्र-
यत्नतइति अष्टम्यामाश्वलायनेनमध्यवर्षसंज्ञंश्राद्धमुक्तं एतेनमाघ्यावर्षश्चोपपद्यापरे-
पक्षेइति इदंसप्तम्यादिषुत्रिषुहस्तकार्यमितिनारायणवृत्तिः हरदत्तस्तमद्यायुक्तेव
षोसस्वभवेद्वयोर्दशीश्राद्धमितिव्याचष्टे अत्रैवाष्टम्यांमहालक्ष्मीव्रतंअत्रचंद्रोदयव्या
पिनीग्राह्या नत्रैवमुक्ताद्युक्तेः परादिनेचंद्रोदयादूर्ध्वं त्रिमुहूर्तापिसापूज्या परतश्चो
र्ध्वगामिनीति मदनरत्नसंग्रहोक्तेः अत्राष्टमतिक्रम्यवर्तनेयात्तरतिथिः नदानस्या
तिथौकार्यंमहालक्ष्मीव्रतंसदेतिवचनाच्चेति अथनवम्यामन्वष्टकाश्राद्धं नवकान्या
यनः अन्वष्टकास्तनवतिःपिंडैःश्राद्धमुदाहृतं पित्रादिमातृमध्यंचनतोमातामहान्तकं
इत्युक्तेचंद्रोदयेब्राह्मोड्डे पितृणांप्रथमंदद्यान्मातृणांतदनंतरं ततोमातामहानांचअन्व
ष्टकासुक्रमःस्मृतः श्राद्धहेमाद्रौछागलेयः केवलास्तत्त्वयेकार्याश्चवृद्धावादौप्रकीर्तिताः ॥ अ

नष्टकासुमध्यस्थानेन्याकार्यस्तमानरः दीपिकायांतु मातुः श्राद्धमादौ कर्तव्यमि॰
त्युक्तं तथाचनिर्णयामृतेमैत्रायणीयपरिशिष्टे अन्वष्टक्यंगयायांमातुः समापयेत्समने
हनि मातुः श्राद्धंसुतः कुर्यात्पितर्यपिचजीवति यद्यपिजीवत्पितृकस्यपंचाप्यन्व॰
ष्टकाश्रवश्यकर्तव्यास्तथापिशक्तस्यैषमावश्यकी अत्रसमानरिजीवत्नामपिसप
त्नमातृभ्योदद्यात् सर्वासामेवमातृणांश्राद्धंकन्यागतेरवौ नवम्यांतुप्रदातव्य॰
व्रह्मलब्ववायन इतिस्मृत्यक्तौसर्वासामितिकथनात् अत्रसर्वासामितिनामनिर्दे॰
शेनैकोद्दिष्टेणैकः पिंडश्चनामैकेनतुद्विवचनादिप्रयोग इतिनारायणवृत्तौ अ
त्रभर्तृमरणोत्तरंमातृश्राद्धंनकार्यमितिमन्वानाः केचिन्नवदंति श्राद्धंनवम्यांकु॰
र्यात् नत्वन्तेभर्तेरित्यक्तनेइति नत्रिमूलमितिप्रामाणिकाः इदंचजीवत्पितृ॰
केनापिसपिंडकार्यं हेमाद्रौविलक्षणमित्रे अन्वष्टकासुचस्त्रीणांश्राद्धंकार्यंत
थैवचेत्युपक्रम्यापिंडनिर्वपणंकार्यमित्युक्तत्वात् इदंहिप्रतिदेशादेवपिंडदाने
प्राप्तेजीवत्पितृकत्वनाभिर्णीपनित्वादिप्रयुक्तनिषेधादिस्यलेप्रतिप्रसवार्थंतु॰

दृष्टेः ॥ अथ सुवासिनीभोजनमुक्तं मार्कंडेयपुराणे ॥ मातृश्राद्धे तु संप्राप्ते ब्राह्मणैः सह भोज
ने ॥ सुवासिन्यै प्रदातव्यमिति शातातपो ऽब्रवीत् ॥ भर्तुरग्रे मृता नारी सह दाहेन वा मृता ॥ तस्याः
स्थाने नियुंजीत विप्रैः सह सुवासिनीं ॥ तत्रैव मदालसावाक्यं ॥ स्त्रीश्राद्धेषु च देयाः स्युः स्त्रीभ्यः का
राश्च योषितः ॥ मंजीरमेखलादामकर्णिकाकंकणादय इति ॥ अत्रैव त्रयोदश्यां श्राद्धं महा
लये मघायुक्तायां त्वतीव प्रशस्तं ॥ यतस्त्वविभक्तैरपि कार्यं पृथक् ॥ तथा च हेमाद्रौ ॥
विभक्ता वा विभक्ता वा कुर्युः श्राद्धं पृथक् सुताः ॥ मघासु च ततो ऽन्यत्र नाधिकारः पृथग्वि
ना ॥ अपरार्के वायवीये ॥ हंसे करस्थिते याम्ये मघायुक्ता त्रयोदशी ॥ तिथिर्वैवस्वती नाम स
च्छाया सा कीर्तिता ऽत्र सा ॥ अत्र पिंडा न देयाः ॥ इदं च मलमासे ऽपि कार्यं ॥ मघात्रयोदशीश्राद्धं प्र
त्युपस्थितिहेतुकं ॥ अनन्यगतिकत्वेन कर्तव्यं स्यान्मलिम्लुचे इति काठकगृह्योक्तेः ॥ अत्र
मघात्रयोदशीमहालययुगादिश्राद्धानां तंत्रेण प्रयोगः ॥ अथ चतुर्दशी ॥ तत्र शस्त्रहत
नां श्राद्धं ॥ यत्तु दैवयुक्तमेकोद्दिष्टमिति केचित् प्रयोगपारिजाते ॥ प्रेतपक्षे चतुर्दश्यामे
कोद्दिष्टविधानतः ॥ दैवयुक्तं न कुर्याद्यपि तृप्तिमतं भवेत् ॥ तथा ॥ तच्छ्राद्धं दैवहीनं च

मृतदात्रयनत्वयः एकोद्दिष्टं दैवहीनमित्येवमनुरब्रवीत् पितामहोपि त्र्यमेनश्चेदेकोद्दि-
ष्टकार्यं यत्तु देवर्षिभिरुक्तं त्रिभ्यपिशाखहनेषु पृथगेकोद्दिष्टत्रयंकार्यं नतुपार्वणं
अर्हस्यवचनाभावादिति नदस्मेनानुमन्यते पित्रादयस्त्रयोयत्र शस्त्रघातादिभिर्हताः सपू
र्वेपार्वणंकुर्यादाहिकानिपृथकपृथक् इति वृद्धपराशरोक्तेः एकस्मिन्नाहिये वापि ×
विषुवत्स्यादिभिर्मृते एकोद्दिष्टं ततः कुर्यात्त्रयाणां दर्शवद्भवेत् इति वृद्धहारीतवचनाच्च
अपरार्के हेमाद्रौ चैवं यत्तु वैवस्वतादिनाहतस्य सांवार्षिकेनैवास्य प्रसंगसिद्धेर्न पृथगनु×
ष्ठानमिति पृथ्वीचंद्रोदये अत्र आज्ञाकरणेन दिनांतरे पार्वणमेव कार्यमिति तन्नैव स्थिते
अमायां विशेषमाह परार्के यमः हंसे करस्थितेयात्र अमावस्या करान्विता सातेया कुंजरच्छा
या इति वैवस्वतोब्रवीत् इति भाद्रपदः आश्विनकृष्णनवमीयापालितानादेव्यायात्रोक्ता का
शेषंते इषकृष्णनवमीयापालितेनाप्रतिपूजिते नारीवापुरुषोवापि लभतेवांछितंफ
लमिति आश्विनशुक्लप्रतिपदि दौहित्रो मातामहश्राद्धं कुर्यात् उक्तं च हेमाद्रौ ज्ञानमा
त्रोपि दौहित्रो जीवत्यपि हि मातुले कुर्यात् मातामहश्राद्धं प्रतिपद्याश्विने सितेइति इदंच

संगवव्यापिनी ग्राह्येति निर्णयदीपे उक्तं प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणं श्राद्धमा
तामहं कुर्यात्सपिता संगवे सदा जातमात्रोपि दौहित्रो जीवत्यपि हि मातुले श्राद्धं संगवये
मं चैव यात्तु युक्तानि पद्मवेदीति वचनात् अत्र सपितेति विशेषणाज्जीवत्पितृक एवाधिका
री अत एव पितुरह्नि न कुर्यात् मुंडनं पिंडदानं च प्रेतकर्म च सर्वशः न जीवत्पितृकः कुर्या
द्गुर्विणीपतिरेव चेति तद्वचनात् अन्यहकावद्विशेषवचनाभावात् अत्रैव नवरा
त्रारंभः तत्र परविद्धा ग्राह्या तदुक्तं गोविंदार्णवे मार्कंडेयदेवीपुराणयोः पूर्वविद्धा तु
या शुक्ला भवेत्प्रतिपदाश्विनी नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता देशभंगो भवेत्त
त्र दुर्भिक्षं चोपजायते नंदायां दर्शयुक्तायां यत्र स्यान्मम पूजनमिति तथा तत्रैव देवीपुरा
णे न दर्शकलया युक्ता प्रतिपच्चंडिकार्चने उदये द्विमुहूर्तापि ग्राह्या सोदयकारिणीति
यदा तु पूर्वदिने शुद्धा भूत्वा परदिने वर्धते तदा पूर्वैव संपूर्णत्वादमायोगाभावाच्च यानि
तु द्वितीयायोगनिषेधपराणि वचनानि तानि शुद्धाधिकापराण्येव परदिने प्रतिपदोस
त्वेन अमायुक्तापि ग्राह्या अमायुक्ता प्रकर्तव्येति नृसिंहप्रसादोदाहृतवचनात्स्यापि तत्र हि

पद्यामेव अत्र देवीपूजाप्रधानं उपवासादिकं त्वंगं अष्टम्यां च नवम्यां च जगन्मातरमंबि
कां पूजयित्वाश्विने मासि विशोको जायते नर इति हेमाद्रौ भविष्ये तस्या एव फलसंबंधा
[illegible]वचनात् अष्टमीनवमीरूपदिनद्वये पूजैव प्रधानमितरत्सर्वमंगमिति निगौडाः
हेमाद्रौ भविष्ये एवं च विंध्यवासिन्यां नवरात्रोपवासतः एकभक्तेन नक्तेन तथैवायाचि
तेन च पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुर इति देवीपुराणे त्रिकालं पूजयेद्देवीं जप
स्तोत्रपरायण इति यत्तु माधवीनोक्तं तस्य नक्तव्रतत्वादिति सोपपातिकनक्तानुवादः अ
न्यथा नवरात्रोपवासनरत्याद्यनुपपत्तेः अत्र वैधृतिचित्रा वा तिक्रम्य व्रतारंभः तत्संभवे
तयोरंशत्रयं पादद्वयं त्याज्यं तथा च भार्गवार्चनदीपिकायां देवीपुराणे त्वाष्ट्रवैधृतियु
क्ता चेत्प्रतिपच्चंडिकार्चने तयोरंते विधातव्यं कलशारोहणं गृहे इति दुर्गोत्सवे कात्यायनः
प्रतिपद्याश्विने मासि भवेद्वैधृतिचित्रयोः आद्यपादौ परित्यज्य प्रारभेन्नवरात्रकं भविष्ये
चित्रावैधृतिसंयुक्ता प्रतिपच्चंडिकार्चने त्याज्यांशास्त्रयस्तस्यास्तुरीयांशे तु पूजनं क
लशस्थापनं तत्र राज्ञो स्थापने कार्ये न चक्रं भाभिषेचनं अतिमानस्योक्तेश्च भास्करोदय

मारभ्य यावद्दशम्यादिकाः प्रातःकाल इति प्रोक्तः स्थापनारोपणादिष्विति मात्स्योक्तेश्चवि
लयमोक्तेश्च आद्याः प्रोक्षणादास्तम्भकायं कुरुते नरः कलशस्थापनं नवरात्रेऽहं जाय
ते ध्रुवमिति भार्गवदीपिकायां देवीपुराणात् डामरतन्त्रवचनोदाहरणाच्च अत्र केचित्
नवरात्रशब्दो नवाहोरात्रपरः वृद्धौ समाप्तिरष्टम्यां ह्रासे साप्रतिपन्निशि प्रारंभो नवचं
डिकनवरात्रमतोऽर्थवादित्वि देवीपुराणादित्याहुः अन्ये नवचनमिदं निमूलं मत्वा तिथि
विशेषपरतामेवाहुः युक्तं चैतत् अतिक्रामसवृद्धौ न्यूनाधिकतयाऽप्यविहरत्वात् उक्तं
च तिथिवृद्धौ तिथिह्रासे नवरात्रमपार्थकं अष्टरात्रे न दोषोयं नवरात्रं तिथिक्षयइति
प्रारंभे नवरात्रस्य मध्ये दौ लक्षणया कर्मपरत्वेनेतिदिक् सूतके पूजनं प्रोक्तं दानं चैव विशेष
तः देवीमुद्दिश्य कर्तव्यं तत्र दोषो न विद्यते इति वचनाद् आशौचेऽपि ब्राह्मणद्वारा कार्यं भू
रिजन्मा न कश्चित्स्नात्वा देवपूजनं कार्यमिति तन्नत्व इदं रजोदोषोऽपि भवति पूजा त्वन्य
द्वारा कर्तव्येति सुवासिन्याः नगंधालंकाररताम्बूलपुष्पमालानुलेपनं उपवासेन दुष्य
तीदं न धावनमंजनमिति गारुडपुराणवचनात् तांबूलादिग्राह्यं आश्विनशुक्लपंचम्यामुपां

गलेनाशक्तिपूजानाद्दाविद्यापिनी यत्रभूरिजन्मा जजनस्य वचनेविनाशाद्विद्यापिमात्र
ह्णोऽष्टमांशाभावाज्ज्ञामरणस्य वाणानां पूर्वाह्णव्यापिन्येव ग्राह्येति नन्दूरिजन्मनोमन्दपत्त
मङ्कुर्तुड्ढिविलसितमात्रमित्युपेत्तं आश्विनशुक्लसप्तमीदेवीपूजायांपरा युगाद्यावर्षवृ-
द्धिश्च सप्तमी पार्वती प्रिया रवेरुदयमीक्षन्तेनेनना सन्तिथ्विगुरमनेति प्रतापमार्तण्डेभवि-
ष्योक्तेः वर्षवृद्धिर्जन्मतिथिः अत्रैव मूलनक्षत्रे पुस्तकस्थापनमुक्तं रुद्रयामले मूलक्ष
र्क्षे सरस्वतीश पूजनीया सरस्वती पूजयेन्नमहं देवया वद्दैलवमस्तकं नाध्यापयेन्न च लि
खेन्नाधीयेन कदाचन, पुस्तके स्थापिते देवि विद्याकामो द्विजोत्तमः संग्रहेपि आश्विन
स्य सितेपक्षे मेधाकामः सरस्वतीं मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेदिति अथ महा
ष्टमी तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी प्रादुर्भूता महाघोरा योगिनीकोटिभि-
र्युता देवीपुराणे सप्तमीवेदसंयुक्तायैः कृतानमहाष्टमी पुत्रदारधनैर्हीना भ्रमन्तेहि-
पिशाचवदिति मदनरत्ने स्मृतिसंग्रहेपि शरन्महाष्टमीपूज्या नवमीसंयुता सदा स
प्तमीसंयुता नित्यं शोकसन्तापकारिणी जंभेन सप्तमीयुक्ता पूजिता च महाष्टमी इंद्रेण

निहन्तिजन्मसन्तानंवंशगवः तस्मात्सर्वप्रयत्नेनसप्तमीसहिताष्टमी वर्जनीयाप्रयत्ने
नमनुजैःशुभकाङ्क्षिभिः सप्तमीकलयायत्रपरतोचाष्टमीभवेत् तेनशल्यमिदंप्रोक्तंपु
त्रपौत्रक्षयप्रदं पुत्रान्हन्तिपशून्हन्तिराष्ट्रंहन्तिसराजकं हन्तिजातानजातांश्चसप्तमीसहि
ताष्टमी शुक्लपक्षेष्टमीचैवशुक्लपक्षेचतुर्दशी पूर्वविद्धानकर्तव्याकर्तव्यापरसंयु
ता वत्सरेश्वयोरितियुग्मवचनेनच अत्रविमर्शनेनूनापिसप्तमीवर्जनप्रयोजिकानत्विमु
हूर्तैव पुराणे सप्तमीस्वल्पसंयुक्तावर्जनीयासदाष्टमी स्तोकापिसातिथिःपुण्यायस्यां
सूर्योदयोभवेदिति नवमीयुक्तालाभेनसप्तमीयुतैवकार्या उपवासमहाष्टम्यांपुत्रवा
न्नसमाचरेदितिमदनरत्ने दुर्गाष्टमी आश्विनशुक्लनवमी लैंगे दुर्गापूजात्तनवमीमू
लाहृत्तत्रयान्विता महतीकीर्तिनानस्यांदुर्गांमहिषमर्दिनीमिति पूजयेदितिशेषः
सापूर्वविद्धाग्राह्यायुग्मवाक्यात् बृहद्यमोपि श्रावणेदुर्गानवमीदूर्वाचैवहुताशनी
पूर्वविद्धाप्रकर्तव्याशिवरात्रिर्बलेर्दिनमिति अस्यामेवदुर्गापूजनहोमबलिदानादि
कार्यमिति राजमार्तण्डे नवम्यांचजपंहोमंसमाप्यविधिवद्बलिमिति ब्रह्मवैवर्तेपि

अत्रापराह्णकेकाले वह्निदानंप्रशस्यते दशमीवर्जयेत्तत्र नात्रकार्याविचारणेति तेन
नवम्यामुपक्रम्य नवम्यामेवसमापयेत् केचिदष्टमीमारभ्य नवम्यांसमापयंति तत्रमू
लेशिष्टाचारएव अत्रडामरुतंत्रेविशेषः पायसंसर्पिषायुक्तं तिलैःशक्रैर्विमिश्रितं हो
मयेद्विधिवज्ज्ञ्याद्दशांशेन नृपोत्तम रुद्रयामलेयथाहोमंमंत्रेणानेनसाधयेत् रुद्रया
मलेपि प्रधानद्रव्यमुद्दिष्टंपायसान्नंतिलास्तथा किंशुकैःसर्षपैःपूगैःलाजसर्वाङ्कुरै
रपि यवैर्वाश्रीफलैर्दिव्यैर्नानाविधफलैरपि रक्तचंदनखंडैश्चगुग्गुलैश्चमनोहरैः प्र
तिश्लोकंचजुहुयात्सर्वद्रव्याणिचक्रमात् अष्टम्यांजागरंकुर्यान्नवम्यांपारणंतथा द
शम्यांचविसर्गःस्यादभिषेकसमायवेति रुद्रयामलात् नवम्यांचविशालात्तुकार्याहो
मादिकाक्रिया पारणंचप्रकुर्वीतदेवीपूजनपूर्वकं दशम्यामिश्रितायत्रपारणेनवै
मीभवेत् सप्तजन्मकृतंपुण्यंतत्क्षणादेवनश्यति तथा योमोहात्पारणंकुर्यादष्टम्यांदि
वसेविभो तदाहन्तासमायाति डिंभिताद्भिर्भयंभवेत् नृपहीनंभवेद्राष्ट्रंदशम्यांपारणे
कृते तस्मान्नपारयेद्देवि नवम्यांभक्तितत्परः नवम्यांपारितादेवीकुलवृद्धिप्रद

ष्टमीतदशम्यापारणाविनादेवीकुलनाशंकरोतिवै तस्मात्तुपारणंकुर्यान्नवम्यांविधुधारिपे·
ति पारणंचस्नानकेपिकार्यं रुद्रयामले स्नानकेपारणंकुर्यान्नवम्यांहोमपूर्वकं तदं·
तेभोजयेद्विप्रान्दानंदद्याच्चशक्तितइति कामोपवासेसंक्रामेनैवेनरान्नृतस्नानके तत्र·
काम्यव्रतकुर्याद्दानार्चनविवर्जितेइति माधवीये पौरुणोक्तेश्च एवंरजोदर्शनमध्ये
पिकार्यं सत्यव्रतः प्रारब्धदीर्घतपसांनारीणांयद्रजोभवेत् नतत्रापिव्रतस्यस्यादुप
रोधःकदाचन एतच्चमथवापरं विधवायास्त्रिरात्रिमध्येभोजननिषेधादितिकेचित्
तन्न निषेधस्यरागप्राप्तभोजनगोचरत्वेनवैधपारणाविषयत्वायोगात् अन्येतुनिय·
मस्थायस्यानारीसंपश्येत्तदारजः उपोष्यैवतुनारीभिःस्नानाशेषवरैस्तुनमित्यंगिरो
वचनान्तेचमेहूतिपारणंकार्यमित्याहुः इतिमहानवमीनिर्णयः ॥ अथविजयद
शमी सादशमीपूजायामेवत्तत्रोदयव्यापिनीग्राह्या तदुक्तंरत्नकोशे ईषत्संध्या
मतिक्रांतःकिंचिदुद्भिन्नतारकः विजयोनामकालोयंसर्वकामार्थसाधकइति दि
नद्वयेतत्त्वाभावेपूर्वैव यापूर्णानवमीयुक्तातस्यांपूज्यापराजिता क्षेमार्थंविजयार्थं·

च पूर्वोक्तविधिना नरैः नवमीशेषयुक्तायां दशम्यामपराजिता ददाति विजयं देवी
पूजिता जयवर्धिनी एकादश्यां न कुर्वीत पूजनं चापराजितमिति स्कांदोक्तेः दश-
मीपुः समुल्लंघ्य प्रस्थानं कुरुते नरः तस्य संवत्सरं राज्ये न कोपि विजयो भवेत् इति दि-
नद्वये तारकोदयकालाभावे परदिने एकादशमुहूर्ते यात्रादिकार्यं आश्विनस्य
सिते पक्षे दशम्यां सर्वराशिषु सायंकाले शुभा यात्रा दिवा वा विजयस्तथा एकादशो
मुहूर्तो हि विजयः परिकीर्तितः तस्मिन्सर्वैर्विधातव्या यात्रा विजयकांक्षिभिरिति भृगू-
क्तेः परदिने एकादशमुहूर्ते व्याप्त्यभावेपि श्रवणयोगश्चेत्तदैव यात्रा कार्या श्रवणर्क्षे
संभविष्ये शमी सलक्ष्मणे पाता मीशाना शाप्रतिष्ठिता संप्रार्थनीया च संपूज्य त्वीशानी
सन्मुखो भवेत् शमी शमयते पापं शमी लोहितकंटका धारिण्यर्जुनबाणानां रामस्य प्रिय-
वादिनी करिष्यमाणयात्रायां यथाकालं सुखं मम तत्र निर्विघ्नकर्त्री त्वं भव श्रीराम-
पूजिते गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदं गीतवादित्रनिर्घोषैरानयेत्स्वगृ-
हं प्रति ततो भूषणवस्त्रादि धारयेत्स्वजनैः सहेति दिक् इति विजयदशमी अश्विन

पौर्णमासी परा ग्राह्या । आश्वयुजीकर्मणि तु प्रत्याहात्व्यापिनी देवकर्मवत् । इत्याश्विनः ॥
अथ कार्तिककृत्यं । तुलायां तिलतैलेन सायंकाले समागते । आकाशदीपं यो दद्यान्मासमे
कं हरिं प्रति । महतीं श्रियमाप्नोति रूपसौभाग्यसंपदमिति निर्णयामृते । कार्तिककृष्णावत्स
द्वादशी सा पूर्वयुता । वत्सपूजा वटश्चैव कर्तव्या प्रथमेहनीति । स्कान्देनरकचतुर्दश्यां
भविष्यत्पुराणे । सवत्सां तुल्यवर्णां च शीलिनीं गां पयस्विनीं । चंदनादिभिरालिप्य पुष्प
मालाभिरर्चयेत् । तद्दिने तैलपक्वं च स्थालीपक्वं युधिष्ठिर । गोक्षीरं गोघृतं चैव दधि तक्रं च
वर्जयेत् । नीराजयेयुर्देवांस्तु विप्रान्गाश्च नरंगमान् । ज्येष्ठान्श्रेष्ठान्कनिष्ठांश्च मानमुख्याश्च
योषितः । कार्तिकचतुर्दशी नरकचतुर्दशी मेवदीपावली । कार्तिकस्यासिते पक्षे त्रयो
दश्यां निशामुखे । यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति । तत्र मंत्रः । मृत्युना पाशदंडा
भ्यां कालेन श्यामया सह । त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतां मम । नम इति वा पाठः
कार्तिकस्यासिते पक्षे चतुर्दश्यामिनोदये । अवश्यमेव कर्तव्यं स्नानं नरकभीरुभिः । अश्व
युक्कृष्णपक्षस्य चतुर्दश्यां विधूदये । कर्तव्यं तिलतैलेन स्नानं नरकभीरुभिः । दिन॰

ह्येव चतुर्दशीसत्वेपूर्वविद्धचतुर्दश्यां कार्त्तिकस्यासितेनरैःप्रत्ते प्रत्यूषसमयेस्नानंकुर्या
त्प्रयत्नतः इति निर्णयदीपे परदिनएवेमन्येदिनद्वयेचन्द्रोदयेचतुर्दश्याभावेन चतुर्द
श्याश्चतुर्थयामेस्नानमिति गयादासनिबंधेस्मृतिदर्पणेपि चतुर्दशीयाश्वयुजस्यकृष्णा
स्यात्कृत्युक्ताचभवेत्प्रभाते स्नानंसमभ्यज्यनरैस्तुकार्यंसगोपतैलेनविभूतिकामैरिति
तैलेलक्ष्मीर्जलेगंगादीपावल्याश्चतुर्दशीं प्रापोतिशेषः तथानारायणः तथाकृष्णच
तुर्दश्यामाश्विनेर्कोदयात्पुरा यामिन्याःपश्चिमेयामेतैलाभ्यंगोविशिष्यतेइति मृगांको
दयवेलायांत्रयोदश्यपायदाभवेत् दर्शोवामंगलस्नानंदुःखशोकभयप्रदमिति कालाद
र्शे त्रयोदशीनिषेधस्तु यदपि त्रयोदशीयदाप्राप्ताःस्वयंयातिचतुर्दशी रात्रिशेषेत्वमा
वास्यान्तदाभ्यंगेत्रयोदशीति सर्वत्तनारायणेनचतुर्थयाममात्रेस्नानमुक्तं ज्योतिर्निबं
धेनारदोपि इषासितचतुर्दश्यामिंदुक्षयतिथावपि ऊर्जादौ स्वातिसंयुक्ते तदादीपाव
लीभवेदिति अमावस्याचतुर्दश्योःप्रदोषेदीपदानतः याममार्गांधकारेभ्योमुच्यतेका
र्तिकेनरइतिदीपदानमुक्तं अतिचतुर्दशी कार्तिकामावस्यायांकृत्यमुक्तमादित्यपुरा

ले दिवा न तत्र न भोक्तव्यमृते बालातुराज्जनात् प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमं दी
पवृक्षास्तथा कार्याः शक्त्या देवगृहेषु च ब्राह्मणान्भोजयित्वादौ संभोज्य च बुभुक्षितान्
अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिना इति ज्योतिर्निबंधे तुलासंस्थे सहस्रांशौ प्रदोषे भूतद
र्शयोः उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनमिति इति कार्त्तिकामावास्यानिर्णयः
अथ कार्त्तिकशुक्लप्रतिपत्पूर्वा पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनमिति बृहद्यमोक्तेः
अत्र तैलाभ्यंगो नित्यः वृद्धवसिष्ठः वत्सरादौ वसंतादौ बलिराज्ये तथैव च तैलाभ्यंगमकु
र्वाणो नरकं प्रतिपद्यते इति हेमाद्रौ स्कान्दे प्रातः गोवर्धनः पूज्यो द्यूतं चापि समाचरेत् पूज
नीयास्तथा गावस्त्याज्ये वाहनदोहने तत्र मंत्रः गोवर्धनधराधार गोकुलत्राणकारक
विष्णुबाहुकृतच्छाय गवां कोटिप्रदो भव इति ब्राह्मे तस्माद्द्यूतं प्रकर्तव्यं प्रभाते तत्र मानवैः
तस्मिन्द्यूते जयो यस्य तस्य संवत्सरं जयः पराजयो विरुद्धश्च लाभनाशकरो भवेत् दर्शेना
मिश्रसहिता नैव या सा च भवेद्विशेषात् इति प्रतिपत् कार्त्तिकशुक्लद्वितीया यमद्वितीया सा
पराह्णव्यापिनी ग्राह्या तदुक्तं स्कान्दे ऊर्जे शुक्लद्वितीयायामपराह्णेऽर्चयेद्यमं स्नानं कृ

नाभानुजन्मोयमलोकंनपश्यति ऊर्जेशुक्लद्वितीयायांपूजितस्तर्पितोयमः वेष्टितः कि
न्नरैर्हृष्टैस्तस्मैयच्छतिवांछितं भविष्ये कार्तिकेशुक्लपक्षस्यद्वितीयायांयुधिष्ठिर यमो
यमुनयापूर्वंभोजितःस्वगृहेर्चितः अतोयमद्वितीयेयंत्रिषुलोकेषुविश्रुता अस्यांनिजगृ
हेविप्रनभोक्तव्यंततोनरैः स्नेहेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्धनं दानानिचप्रदेयानि
भगिनीभ्योविधानतः स्वर्णालंकारवस्त्रान्नपूजासत्कारभोजनैः सर्वाभगिन्यःसंपूज्याभ्र
भावेप्रतिपन्नकाः ब्रह्मांडे यातुभोजयतेनारीभ्रातरंयुग्मकेतिथौ अर्चयेच्चापितांस्वलेने
सावैधव्यमाप्नोति भ्रातरायुःक्षयोनजायतेकर्हिचित् इतियमद्वितीयानिर्णयः
कार्तिकशुक्लैकादश्यांभीष्मपंचकव्रतंनारदीयेउक्तं अत्रैवदेवस्योत्थापनमुक्तंहेमाद्रौ
पाद्मे एकादश्यांतुशुक्लायांकार्तिकेमासिकेशवं प्रसुप्तंबोधयेद्रात्रौश्रद्धाभक्तिसमन्वि
तइति प्रबोधमंत्रोवाराहे ब्रह्मेंद्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वंदितवंदनीय बुध्यस्व
देवेशजगन्निवासमंत्रप्रभावेनसुखेनदेव इयंचद्वादशीदेवप्रबोधार्थंविनिर्मिता त्वयैव
सर्वलोकानांहितार्थंशेषशायिना त्वयिसुप्तेजगन्नाथजगत्सुप्तंभवेदिति उत्थितेचेष्टा

नेसर्वंमुनिश्रेष्ठानिष्टमाधव उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते त्वयिसुप्तेजगत्सुप्तमुत्थि
तेचोत्थितंजगदिति एवंप्रबोधयेत्पुष्पांजलिंदद्यात् तत्रमंत्रः गतामेघावियच्चैवनिर्मलंनिर्म
लादिशः शारदानिचपुष्पाणिगृहाणममकेशवेति अथकार्तिकशुक्लद्वादशी अस्यामे
वचातुर्मास्यव्रतसमाप्तिः चतुर्थांगृह्यवैचीर्णंचातुर्मास्यव्रतंनरैः कार्तिकेशुक्लपक्षेतुद्वा
दश्यांतत्समापयेदितिभारते मंत्रश्च इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो न्यूनंसंपूर्णतां
यातुत्वत्प्रसादाज्जनार्दनेति कार्तिकशुक्लावैकुंठचतुर्दशी वर्षेवैहेमलंबाख्येमासिश्री
मतिकार्तिके शुक्लपक्षेचतुर्दश्यामरुणाभ्युदयंप्रति महादेवतिथौब्राह्मेमुहूर्तेमणि
कर्णिके स्नात्वाविश्वेश्वरोदेवोविश्वेश्वरमपूजयत् संक्षेपज्योतिषसत्यपतिष्ठाख्येन
दाकरोत् स्वयमेवस्वमात्मानंचरत्पाशुपतव्रतमिति तथा ततःप्रभातेविमलेकृतपू
जोमहाद्युतः देउपालेमहानाम्निदिनेस्मिन्कृतपारणः श्रीमद्भवानीसहितःसंप्रविश्योदन
नमं इतिसनत्कुमारसंहितोक्तेकाशीखंडे कार्तिकस्यचतुर्दश्यांविश्वेशंयोविलोकये
त् स्नात्वाचोत्तरवाहिन्यांनतस्यपुनरागतिरिति अथकार्तिकपौर्णमा कार्तिक्यांकृत्ति

कायोगे यः कुर्यात्स्वामिदर्शनं सप्तजन्मभवेद्विप्रो धनाढ्यो वेदपारग इति काशीखंडे
त्रिपुरोत्सवो प्यत्रैवोक्तो भविष्ये पौर्णमास्यां तु संध्यायां कर्तव्यस्त्रिपुरोत्सवः दद्यादनेन
मंत्रेण प्रदीपांश्च सुरालये कीटाः पतंगा मशकाश्च वृक्षा जले स्थले ये विचरंति जीवाः
दृष्ट्वा प्रदीपं न हि जन्मभागिनो भवंति नित्यं श्वपचा हि विप्राः इति इति कार्त्तिकः मार्गशी
र्षकृष्णाष्टम्यां काशीखंडे कालभैरवपूजोक्ता मार्गशीर्षसिताष्टम्यां कालभैरवसन्नि
धौ उपोष्य जागरं कुर्यान्सर्वपापैः प्रमुच्यते इति काशीखंडात् कृत्येषु सर्वेषु कर्तव्यासंमु
खी तिथिः वर्तीवरात्रिव्रतानां वाते दिनद्वयेंशतो व्याप्तावाते भैरवोत्पत्तेः प्रदोषकालीनत्वा
दिति ...... वरहस्य मध्याह्ने भैरवो व्ययेत् ...... नित्ययात्रादिकं कृत्वा ......
णा रुद्रावतरणे कृता ...... इत्यतां नः श्रीकालभैरवः ...... यदा लोकान्नीषयन्नवि
लानिति कृत्वा च विविधां पूजां महासंभारविस्तरैः नरो मार्गसिताष्टम्यां वार्षिकं वि
घ्नं उत्सृजेत् तीर्थकालोदकैः स्नात्वा कृत्वा तर्पणमन्वहं विलोक्य कालराजानं निरया
दुद्धरेत्पितॄनिति मार्गशीर्षशुक्लपंचमी नागपंचमी शुक्ले मार्गशिरे पुण्या श्रावणे या

ति·
नि·
२८

वपंचमी स्नानदानेवेह्वफलानागलोकप्रदायिनीति स्कांदे हेमाद्रौ इयमपिपरैवपंच
मीनागपूजायामितिवचनात् मार्गशुक्लषष्ठीचंपाषष्ठी मार्गेभाद्रपदेशुक्लाषष्ठीवैधृ
तिसंयुता रविवारेणसंयुक्ता साचंपेतिप्रकीर्तितेतिमल्लारिमहात्म्ये मार्गशीर्षशुक्लपक्षे
षष्ठ्यावीरेशुमालिनः शतनामगतेचंद्रेलिंगस्याहुह्रिगोचरेइति इयंयोगविभागेनपू
र्वाग्राह्या तदभावेसप्तमीयुताषष्ठी अथचतुर्दशीकाशीखंडे मार्गपूर्णेचतुर्द
श्यांकाचदिश्वरसन्निधौ स्नानंतदूर्ध्वंनिजनात्स्ले। पैशाचैर्भवाप्नुयुः इयमासांवत्सरी
ति तत्रभूमौउर्ध्वमानवाः तीर्थप्रतिग्रहान्यापात्रिलक्षनितदोनगः॥ इतिमार्गशीर्षः ....
.... योगविशेषउक्तः भारते अमावास्यापानश्रवणैर्युक्ताचेत्पौषमाघयोः अर्धोद
यस्सविज्ञेयःसूर्यकोटिग्रहैःसमः दिवैवयोगःशस्तोयंननरात्रौकथंचन स्कांदे अ
र्धोदयेतुसंप्राप्तेसर्वंगंगासमंजलं शुद्धात्मानोद्विजाःसर्वेभवेयुर्ब्रह्मसंमिताः यत्किंचि
द्दीयतेदानंतद्दानंमेरुसन्निभमिति प्रसंगादन्यदपि अमासोमसमायोगेआर्द्रयचनल
भाने तीर्थंकपिलधारैस्मिन्नायायापुष्करेणकिं दिव्यांतरिक्षभौमानियानितीर्थानि

सर्वेशः नान्यत्रनैवसिध्यतिदर्शोसोमदिनान्वितइति स्कांदेशालेः अमावस्याचसोमे
नसप्तमीभानुनानया चतुर्थीभूमिपुत्रेणसोमपुत्रेणचाष्टमी चतस्रस्तिथयस्त्वेताः
सूर्यग्रहणसन्निभाः स्नानेदानेतथाश्राद्धेसर्वेतत्राक्षयंभवेदिति मृग्यमावः तलाय
करमेषेशुभानःस्नायीसदाभवेदिति माघस्नानमुक्तं माघेमासिवयःस्नायान्नैवंनयें
णभारत पौंडरीकफलेनस्यादेवमेदिवसेभवेदिति ब्रह्मपुराणे एकादश्यांशुक्ल
पक्षेस्नानंपौषेसमारभेत द्वादश्यांपौर्णमास्यांवाशुक्लपक्षेसमापनं माघशुक्लाच
रदचतुर्थीकाशीखंडे माघशुक्लचतुर्थ्यांतुनक्तव्रतपरायणः येनार्चुंढेर्वैविघ्न
निनेद्याःसुरसत्तहा विधायवार्षिकींयात्राचतुर्थीप्राप्यतापसी शुक्लासितान्त
ईवेह्नाशश्रीयाहलुकान्वनी नापसीमाघी अत्रनक्तग्रहणात्प्रदोषव्यापिनीग्राह्येति
दिक् माघशुक्लसप्तमी रथसप्तमी साऽरुणोदयव्यापिनीस्नानादौग्राह्या सूर्यग्रहण
तुल्यानशुक्लामाघस्यसप्तमी अरुणोदयवेलायांतस्यांस्नानंमहाफलमितिविस्मृतेः
अरुणोदयवेलायांशुक्लामाघस्यसप्तमी प्रयागेयदिलभ्येतकोटिसूर्यग्रहैःसमेति स्य

त्येनराज्ञ हितहृदयेरुणोदयश्चेत्पूर्वेद्युर्धर्मुन्योरितिपुरमवाकाल भविष्ये सौवर्णेराजते
ताम्रेभक्त्यालावुमयेनवा तैलेनवर्तिदांतथामहारजनरंजिना समाहितमनाभूत्वा दत्वा
शिरसिदीपकं भास्करंहृदयेध्यात्वाऽमंमंत्रमुदीरयेत् नमस्तेरुद्ररूपायरसानांपतये
नमः वरुणायनमस्तेस्तुहरिवासनमोस्तुते जलेपरिहरेद्दीपंध्यात्वासंतर्प्यदेवताः
तिकाशीखंडे लोलार्केरथसप्तम्यांस्नात्वागंगासिसंगमे सप्तजन्मकृतैःपापैर्मुक्तोभ
वतितत्क्षणादिति गर्गः षष्ठीचसप्तमीयोगोवारश्चेदंशुमालिनः योगोयंपद्मकोना
मसहस्रार्कग्रहैःसमः इतिकाशीखंडे अर्घ्यमंत्रः यद्यज्जन्मकृतंपापंमयासप्तसुजन्मसु
तन्मेशोकंचरोगंचमाकरीहंतसप्तमीति माघशुक्लाष्टम्यांभीष्मतर्पणं श्राद्धंचोक्तंहे
माद्रौपाद्मे माघेमासिसिताष्टम्यांसतिलंभीष्मतर्पणं श्राद्धंचयेनराःकुर्युस्तेस्युःसंतति
भागिनइति तर्पणमंत्रस्तुभारते भीष्मःशांतनवोवीरःसत्यवादीजितेंद्रियः आभिर
द्भिरवाप्नोतुपुत्रपौत्रोचितांक्रियां वैयाघ्रपद्यगोत्रायसंकृतिप्रवरायच अपुत्रायददा
म्येतत्सलिलंभीष्मवर्मणे वसूनामवतारायशंतनोरात्मजायच अर्घ्यंददामिभीष्माय

र्योर्धंगामिन्याप्रानरेवहिपारणास्मिति ॥ इतिशिवरात्रिचतुर्दशी ॥ मासशिवरात्रिस्तुव
द्रुराञव्यापिनीग्राह्या ॥ यत्प्रदोषव्यापिनीग्राह्येतिनत्संम्पूर्णविषयम् ॥ तयाचविश्वः
रूपेनदेकेशवरवचनम् ॥ मोक्षमार्गरतानांचमुनेनामूर्धरेनसाम् ॥ तेषामेवहिसंप्रोक्ता
मामावस्याचतुर्दशी ॥ इतिप्रतिमासशिवरात्रनिर्णयः ॥ फाल्गुणामावस्यायांरुद्रा
दिपूजोक्तालैंगेफाल्गुणप्रकमे ॥ अमावस्यायांपूजाश्वरुद्रोग्निब्राह्मणस्तथा ॥ मां॰
सोदनैःपौलिकाभिःपूजयत्वात्मासवान्थव ॥ इति ॥ अथश्रवणाघार्कयोगेव्यतीपातः
तथाचशेवः ॥ श्रवणाश्विधनिष्ठाद्रीनागदैवतमस्तकैः ॥ अमावेद्रविवारेणव्यत
तीपातःसउच्यते ॥ तत्रजमेरुनेदत्तसर्वेकोटिगुणंभवेदिति ॥ नागदैवतमश्लेषामस्त
कस्मृगशिरा ॥ इतिफाल्गुणमासनिर्णयः ॥ फाल्गुणपूर्णिमायांहोलिकोत्सवः ॥ नृपं
प्रतिनारदवचोभविष्ये ॥ अथपंचदशीशुक्ला फाल्गुणस्यनराधिप ॥ अभयंचैवलोकानां
दीयतांपरमेश्वर ॥ यथाह्यशंकिनालोकारमंतिचहसंतिच ॥ दारुजानिचखड्गानि॰
गृहान्तासमग्रन्तकाः ॥ योधाइवविनिर्यान्तुशिशवःसंप्रहर्षिताः ॥ संचयशुष्ककाष्ठा॰

भेत्तिकामिकात् यदा पूर्वेद्युर्निशीथे परेद्युश्च प्रदोषे तदा पूर्वेद्युरेव अर्धरात्रात्परस्ता
च्चेत्तु योगो यदा भवेत् औमो वा यत् भवेद्देवि कर्तव्यं व्रतमुत्तमम् इति भविष्ये माघमा
से चतुर्दश्यां कृष्णपक्षे समाहिता कृत्तिवासेश्वरं लिंगं ये चैवं यांति शिवं शुभं ते यांति प
रमं स्थानं सदाशिवमनामयमिति पारणं तिथिमध्य एव कार्यं तथा च माधवीये स्कां
दे उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणं कृतैः सुकृतलक्षैश्च लभ्यते वा यदि वा न वा
ब्रह्माद्यैरपि मर्त्येन यानि तीर्थानि संति वै संस्नातानि भवंतीह भूतायां पारणे कृते
तिथीनामेव सर्वासामुपवासव्रतादिषु तिथ्यंते पारणं कुर्याद्विना शिवचतुर्दशीमि
ति यत्तु जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च पूर्वविद्धैव कर्तव्या तिथिभांते च
पारणमिति स्कांदेपि कृष्णाष्टमी स्कंदषष्ठी शिवरात्रिचतुर्दशी एताः पूर्वयुता
कार्याः तिथ्यंते पारणं भवेदिति तद्गौणकालपरं सकालातिक्रांते गौणः कालः स
र्वस्य कर्मण इति मदनरत्नोक्तेः तिथ्यंतयोर्यदा छेदो नक्षत्रांतमथापि वा अर्धरात्रे
प्यथवा कुर्यात्पारणं त्वपरेऽहनि अतः कुर्यात्त्रियामे वापि शास्त्रं भारतपारणमिति यामा

स्मन्नेतरेच भवेद्यत्त्रयोदश्यां भूतव्याप्तमहानिशा । शिवरात्रिव्रतं तत्र कुर्याज्जागरणं त
थेति ईशानसंहितायां व्याप्यार्धरात्रं यस्यां तु लभ्यते याचतुर्दशी । तस्यामेव व्रतं कार्यं
मत्प्रसादार्थिभिर्नरैः । पूर्वेद्युर्वा परेद्युर्वा महानिशि चतुर्दशी । व्याप्ता सा दृश्यते यस्यां
तस्यां कुर्याद्व्रतं नरः । लिङ्गाविर्भावकाले तु व्याप्ता ग्राह्या चतुर्दशी । नहूधीयोगाविनाभूता
सा कार्या व्रतिभिः सदेति । मम प्रियकरी ह्येषा माघकृष्णचतुर्दशी । महानिशा युता ग्राह्या
तत्र कुर्याद्दिदं व्रतमिति । दिनद्वये निशीथव्याप्तौ अव्याप्तौ परैव । आदित्यास्तमये का
लेऽस्ति चेद्या चतुर्दशी । तद्रात्रिः शिवरात्रिः स्यात्सा भवेदुत्तमोत्तमेति कामिकात् । शि
वपुराणे प्रदोषव्यापिनी ग्राह्या शिवरात्रिः शिवप्रियैः । रात्रौ जागरणं यस्मात्तस्मात्तां
समुपोषणमिति । दिवारात्रिव्रतेयस्य एकमेकत्रियोगतः । तस्मात्सुभययोगित्वाभाव
रेतत्तद्व्रतीति स्मृतेः । प्रदोषव्याप्त्यधिका स्यात्पूर्वदिन एव प्रदोषनिशीथोभयव्याप्तौ पूर्वे
कत्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः । जागरे शिवरात्रिः स्यान्निशि पूर्णा चतु
र्दशीति स्कान्दात् । परेद्युरेव नाडीचेत्सैव निशाद्वयं चतुर्दश्या पूर्वा त्याज्या परा तु

यश्चाबाल्यंब्रह्मचारीरोऽइतिपाद्मे ब्राह्मणाद्याश्चवर्णायेदद्युर्भीष्मायनोजलं सेव
त्सरकृतंतेषांपुण्यंनश्यतिसत्तमेति इतिमाघः अथशिवरात्रिः स्कांदे माघस्यकृ
ष्णपक्षेयातिथिश्चैवचतुर्दशी शिवरात्रिस्तुसाख्यातासर्वपापनिसूदिनीति इद
नित्यंकाम्यंच परात्परतरंनास्तिशिवरात्रिःपरात्परं नपूजयतिभक्त्येशंरुद्रंत्रिभुव
नेश्वरं नित्यत्वमुक्तं जन्मजन्मसहस्रेषुभ्रमतेनात्रसंशयइति नित्यत्वमुक्तं शिवेच-
पूजयित्वायोजागर्तिचचतुर्दशी मानःपयोधरंसेनपिबेत्सकदाचन ममभक्तस्तुयो-
देविशिवरात्रिमुपोषकः गणत्वमक्षयंदिव्यमक्षयंशिवशासने सर्वान्भुक्त्वामहाभो
गान्मुक्तोभूयोनजायतइति काम्यत्वंचोक्तं तत्रनिशीथव्यापिनीचतुर्दशी माघकृष्ण
चतुर्दश्यामादिदेवोमहानिशि शिवलिंगमभूत्रकोटिसूर्यसमप्रभ तत्कालव्यापिनी
ग्राह्याशिवरात्रिव्रतेतिथिरितीशानसंहितोक्तेः नारदीयेपि अर्धरात्रयुतायत्रमाघकृ-
ष्णचतुर्दशी शिवरात्रिव्रतंतत्रसोऽश्वमेधफलंलभेत् स्कांदे महतामपिपापानांदृष्टा-
वैनिष्कृतिःपरा नदृष्टाकृतवंतोषंसांकृत्यकोऽतिथिशिवामिति दृशीयोगनिषेधोऽशस्य

ह्वानामुपलानांवकारयेत् तत्राग्निंविधिवद्धुत्वारक्षोघ्नैर्मंत्रविस्तरैः ततःकिलकिल
शब्दैस्तालशब्दैर्मनोहरैः तेनशब्देनसापापाहोमेनचनिराकृता साढौंढाख्यागावसी
नैव सर्वदुष्टापहोहोमः सर्वरोगोपशांतिदः क्रियतेस्तद्द्विजैःपार्थतेनसाहोलिका
स्मृतेति तमग्निंत्रिः परिक्रम्यगायंतुचहसंतुच जल्पंतुःस्वेच्छयालोकानिःशंकायः
स्ययन्मनः तत्रपूर्णिमाप्रदोषव्यापिनीग्राह्यातदुक्तंनैव उपस्यपूर्णिमायांतुराज
न्यांहोलिकोत्सवइति चंद्रप्रकाशेनारदोपि प्रतिपद्भूतभद्रासुयार्चिताहोलिकादि
वा संवत्सरंचतद्राष्ट्रंपुरंदहतिसाद्भुतं प्रदोषव्यापिनीग्राह्यापौर्णिमाहिसदाबुधैः
तस्यांभद्रामुखंत्यक्त्वापूज्याहोलानिशामुखेइति निशागमेतुपूज्येतहोलिकासर्व
तोमुखेइति एषाचेद्दोद्वयेद्वासवाकाश्च दिनद्वयेप्रदोषव्याप्तौपरैव भद्रायांदी
पिताहोलीराष्ट्रभंगंकरोतिवै नगरस्यचनैवेष्टा तस्मात्तांपरिवर्जयेत् पूर्वदिनेप्र
दोषव्यापिनीभद्रायुक्ताचनपरदिनेतदापूर्वेद्युरेवरात्रौभद्रांतेकार्या दिनद्वयेप्यस्पृ
तोयामास्यात्फाल्गुनीपूर्णिमायदि रात्रौभद्रावसानेतुहोलिकातत्रदीपयेदितिभवि

ध्योत्सवात् । राकायामह्नयाहूर्ध्वं चन्द्रदर्शनं यदा भवेत् । होलां भद्रावसाने तु निशीथांते·
ऽपि दीपयेदिति पुराणसमुच्चयात् । यत्तु भद्रायां विहितं कार्यं होलिकायाः प्रपूजनमि
ति । यच्च मध्यरात्रमतिक्रम्य विष्टेः पुच्छं यदा भवेत् । प्रदोषे ज्वलयेद्वह्निं सुखसौभाग्यप·
दायकं । प्रदोषान्मध्यरात्रांते होलिकापूजनं शुभमिति च केचिद्‌ लेखि । तदनाकरम्
यदा तु पूर्वरात्रप्रदोषव्याप्त्यभावस्तत्रापि वा भद्रारहितः कालो न प्राप्यते उत्तरदिने च
प्रदोषे पूर्णिमाभावस्तदा भद्रापुच्छे कार्यम् । तथा च लल्लः । पृथिव्यां यानि कार्याणि शु
भानि त्वशुभानि च । तानि सर्वाणि सिध्यंति विष्टिपुच्छे न संशय इति । भद्रापुच्छं तु ज्योतिः·
शास्त्रे प्रसिद्धं । अस्मिन्नेव विषये उत्तरदिने पूर्णिमासार्धयामत्रयमिता ततोऽधिका वा प्र
तिपच्च वृद्धिस्तदा पूर्णिमोत्तरप्रतिपदि प्रदोषे होलिका कार्या । नत्र पूर्वे पुर्विष्टिपुच्छे
सार्धयामत्रये पूर्णा द्वितीयदिवसे यदा । प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृतेति भ
विष्योक्तेः । यानूत्तरदिने प्रदोषैकदेशोऽस्ति पूर्वरात्रौ च भद्रारहितो नैव लभ्यते सा स्व·
तरा मन्त्रैरेव । यदा पूर्वरात्रिर्भद्राव्याप्ता उत्तरदिने प्रदोषे च चन्द्रग्रहणं तत्र स्नानात्कार्या ।